सत्येन ब्रह्मचर्येण व्यायामेनाथ विद्यया ।
देशभक्त्यात्मत्यागेन सम्मानार्हः सदा भव ॥

# संस्कृत-गद्यलहरी

भाग १





चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

॥ श्रीः ॥

हरिदास संस्कृत ग्रन्थमाला

२६०

॥ श्रीः ॥

# संस्कृत-गद्यलहरी


हरिहर झा

एम० ए०, बी० एड्०, व्याकरणाचार्य, साहित्याचार्य,

अध्यापक, सेंट्रल हिन्दू स्कूल, काशी हिन्दू विश्वविद्यालय





चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

बृहस्पति के अवतार, वात्सल्य के देवता

और भारतीय संस्कृति के प्राण

अपने पिता

को



हरिहर

# आमुख

बड़े उल्लास का विषय है कि स्वतन्त्र भारत के उदात्त लोक-नायकों का ध्यान संस्कृत के महत्त्व की ओर आकृष्ट हो रहा है। सचमुच संस्कृत का अध्ययन किए बिना भारतीय राष्ट्र की आत्मा का पूर्ण परिचय नहीं प्राप्त किया जा सकता। यदि साहित्य, अपने सामान्य अर्थ में, मानव-जीवन की चेतना है, तो संस्कृत-साहित्य मानव-आत्मा की अमर चेतना है। वाल्मीकि और व्यास, भास और कालिदास, बाण और जयदेव, श्रीहर्ष और जगन्नाथ—इन सबकी समवेत साधना की चरम सिद्धि, अथ च वैदिक ऋषियों की मनीषा तथा चिन्तन-शक्ति का मधुर परिपाक है यह संस्कृत साहित्य।

प्रस्तुत कृति में उसी संस्कृत-साहित्य के रस-पेशल एवं शिक्षाप्रद प्रकरणों का समावेश है। स्वतन्त्र-भारत एवं विज्ञान-जगत् के आधुनिकतम विषय भी यथास्थल निबद्ध हैं।

इसमें मनोवैज्ञानिक, ऐतिहासिक, वैज्ञानिक, सांस्कृतिक, साहित्यिक, राजनीतिक, धार्मिक, भौगोलिक, व्यापारिक, राष्ट्रिय एवं अन्ताराष्ट्रिय आदि सभी प्रकार का ज्ञान देनेवाली रचनाएँ संगृहीत हैं।

शिक्षा-मनोविज्ञान की प्रश्नोत्तर-प्रणाली जटिलतम विषयों को भी हृदयंगत कराने के लिए ग्राह्य और उपादेय समझी जा रही है।

इसी दृष्टिकोण को ध्यान में रखकर पाठों के उपरान्त पर्याप्त प्रश्नावली भी दे दी गई है।

प्रस्तुत पुस्तक का प्रधान उद्देश्य है—विद्यार्थियों में राष्ट्र-प्रेम, प्रयत्नवाद, प्रगतिवाद, आशावाद तथा मानवतावाद की उदात्त प्रवृत्तियों का युग-चेतना के अनुरूप सञ्चार करना। यही कारण है कि रूढ़िवादी, दुरूह एवं युग के प्रतिकूल विषयों का बड़ी सतर्कता से परित्याग कर दिया गया है। मेरा दृढ़ विश्वास है कि इन पाठों के अनुशीलन-परिशीलन से छात्रों के हृदय में अपने प्रशस्त एवं स्वर्णिम अतीत के प्रति श्रद्धा के भाव जागरित होंगे।

'गद्यलहरी' की अमर भारती छात्रों के चरित्र-निर्माण के लिए मधुमय वरदान बने यही कामना है।

मैं काशी हिन्दू विश्वविद्यालय के अधिकारियों—डा० श्री सूर्यकान्त शास्त्री, श्रीयुत कालीकृष्ण वराट् तथा उन सभी गुरुजनों, मित्रों, लेखकों, एवं प्रकाशकों का हृदय से ऋणी हूँ, जिनके आशीर्वाद और सहयोग से यह कृति प्रकाश में आ सकी है।

—हरिहर

# विषय-प्रवेशः


| | | | पृष्ठ |
|---|---|---|---|
| १ भारतमातृ-वन्दना | ... | ... | ३ |
| २ संस्कृतस्य महत्त्वम् | ... | ... | ७ |
| ३ छात्रधर्मः | ... | ... | १३ |
| ४ महामनाः मदनमोहनमालवीयः | | ... | १८ |
| ५ विद्याध्ययनम् | ... | ... | २५ |
| ६ भारतस्य राजधानी ( नई दिल्ली ) | | ... | ३३ |
| ७ भारतीय-संविधानम् | ... | ... | ३८ |
| ८ पृथिव्याः स्वर्गः | ... | ... | ४४ |
| ९ सूर्य-चन्द्र-ग्रहणम् | ... | ... | ४९ |
| १० शीलं परं भूषणम् | ... | ... | ५४ |
| ११ दीपमालिका | ... | ... | ६० |
| १२ भरत-मिलनम् | ... | ... | ६८ |
| १३ शिवराजस्य शौर्यम् | ... | ... | ७५ |
| १४ भगवान् बुद्धः | ... | ... | ८० |
| १५ बालकः सर्वदमनः | ... | ... | ८९ |
| १६ युक्तिः शक्तेर्गरीयसी | ... | ... | ९६ |
| १७ भूकम्पः | ... | ... | १०२ |
| १८ स्त्री-शिक्षा | ... | ... | १०६ |
| १९ चलचित्रम् | ... | ... | ११२ |
| २० स्वराज्यस्य मन्त्रद्रष्टा | ... | ... | ११८ |




# भारतमातृ-वन्दना



हिमवता मुकुटेन विराजिता
द्विगुणषोडशकोटिसुतान्विता ।
स्मितपराजितपूर्णसुधाकरा
जयति भारतवर्ष-वसुन्धरा ॥ १ ॥

अमृतपङ्कज-भास्वरिताननना
छवि-विनिन्दित-नन्दनकानना ।
अमल-कोमल-बिम्ब-फलाधरा
जयति मे सुजला सुफला धरा ॥ २ ॥

महितराघवसाधवमातृका
विहितवर्गचतुष्टयदातृका ।
अधिगता मुनिभिश्च यतो जनिः
जयति मे वरदा भरतावनिः ॥ ३ ॥

प्रणतमानवबुद्धिविकाशिनी
प्रबलराक्षसवंश-विनाशिनी ।
सुमतिदा विशदा भयहारिणी
जयति मा परमाऽऽमयवारिणी ॥ ४ ॥

श्रुतिशुचिस्मृतिदर्शनहेतवे
विधुरवीचिभवार्णवसेतवे ।
निखिलवाञ्छितकामदधेनवे
तव धरित्रि नमोऽङ्घ्रिजरेणवे ॥ ५ ॥

सुमहनीयमहामहिमान्वितं
विजयिनीं महतीं महितां हिताम् ।
प्रतिपलं कलये हृदि सादरं
विबुध-वन्दित-भारतमातरम् ॥ ६ ॥

सुरसरिद् यमुना च सरस्वती
सुरस-सिन्धुनदी च दृषद्वती ।
अगणिताः सरितोऽपि च नर्मदा
धवलयन्ति पदं तव सर्वदा ॥ ७ ॥

मलयजः पवनः परिपावनः
सरसिजामृतशीकरवाहनः ।
व्यजनमातनुतेऽनिशमर्चिते
वपुषि ते हरिचन्दनचर्चिते ॥ ८ ॥

जनित-विष्णु-विरञ्चि-दिगम्बरा
वितत-शुद्ध-यशो-लसदम्बरा ।
ऋषि-महर्षि-निपीत-पयोधरा
जयति जन्मधरा सुमनोहरा ॥ ९ ॥

पदपरागमतीव शुभङ्करं
परिचरन्नयि ! तेऽम्ब ! निरन्तरम् ।
प्रियजनं जनकं च सहोदरं
परिजहामि भजामि च नोदरम् ॥ १० ॥

जननि मन्नयनं भयनाशया
प्रथममुल्लसितं तव भासया ।
मृतिदिनेऽपि तया परिपूरितं
भवतु भारतभूमि ! निमीलितम् ॥ ११ ॥

न वसु नापि सुखं न सुतानये !
परपदं जगदम्ब ! न कामये ।
चरणमर्चितुमीश्वरि ! तावकं
जनुरिदं व्यतिगच्छतु मामकम् ॥ १२ ॥

**प्रश्नाः**

१. भारतस्य कियती जनसङ्ख्याऽस्ति ?

२. भारतस्य सांस्कृतिकः इतिहासः कीदृशोऽस्ति, वर्णयत ।

३. काः नद्यः भारतपदं प्रक्षालयन्ति ?

४. भारतभक्तः केन प्रकारेण भारतम् अर्चितुमिच्छति ?

५. भारतभक्तस्य कः अन्तिमोऽभिलाषोऽस्ति ?



# संस्कृतस्य महत्त्वम्

सुरभारत्याः साहित्यस्य प्राचीनतमत्वे, सर्वभाषा-साहित्यानां दैशिकानां वैदेशिकानां च मूलभूतत्त्वे, अत्यन्तम् उपादेयत्वे च नास्ति लेशतोऽपि सन्देहः भाषातत्त्वविदां विद्वन्मूर्धन्यानाम्। विस्तृतत्वेऽपि संस्कृत-साहित्यं हिन्दी–बंगाली–मराठी–तेलुगु–भाषा–साहित्यानि ग्रीक–लैटिन–फ्रेञ्च–साहित्यानि च अतिशेते।

कालप्रभावेण दुःशासनप्रभावेण च असंख्यानि अमरवाण्याः ग्रन्थरत्नानि विलुप्तानि। माधुर्ये, गाम्भीर्ये, सौन्दर्येऽपि अन्यासां सर्वासां भाषाणां मूर्धन्यैव इयम् अमरभारती। सर्वासामेव गिराम् इयं जननी इति हेतोः कस्यामपि भाषायां प्रावीण्यम् आसादयितुम् अस्याः अध्य-यनस्य परमावश्यकत्वं प्रतिक्षणम् अनुभवन्ति भाषातत्त्व-विदः। अत एव स्वदेशे इव विदेशेष्वपि अस्याः अध्ययना-ध्यापनयोः प्रचारः निरन्तरं वर्धमानो दृश्यते।

अधुना हिन्दीभाषा राष्ट्रभाषा सञ्जाता। संस्कृतस्य शब्दकोशो विशालः सम्पन्नश्चास्ति। संस्कृतमेव एकमात्रं हिन्दीभाषां समृद्धां सम्पन्नाञ्च कर्तुं प्रभवति, यतो जननी स्तनन्धयां स्वपुत्रीं लालयति पालयति च।

संस्कृतस्य व्याकरणमपि अप्रतिममस्ति । अस्य व्याकरणस्य शब्दरचनाशक्तिरपूर्वा आस्ते । यथा आंग्ल-भाषा लेटिनतः शब्दानङ्गीकृत्य आत्मानं भरति तथैव हिन्दीभाषापि संस्कृतभाषायाः शब्दान् गृहीत्वा निजशब्द-राशिप्रवर्धनेन आत्मानं सम्पन्नां समृद्धां च कर्तुं पारयति ।

भाषाविज्ञानस्य सम्यग्ज्ञानार्थं संस्कृतस्य ज्ञानमनि-वार्यम् । अतो भाषाविज्ञानदृष्ट्यापि संस्कृतमद्य महत्त्वपूर्ण-स्थानमधितिष्ठति ।

समालोचनशास्त्रस्यापि सम्यग्विवेचनं संस्कृतस्य ज्ञानं विना को नु कर्तुं शक्नोति ? भारतीयपुरातत्त्वविद्या-र्थिने तु संस्कृतस्य ज्ञानमनिवार्यं वर्तते । यतः प्राचीन-शिलालेखाः संस्कृते लिखिताः सन्ति । प्राच्यभारोपीय-( इण्डो-योरोपियन ) भाषाणां सम्यक्परिशीलनाय संस्कृत-भाषापरिज्ञानमनिवार्यम् । साहित्यदृष्ट्यापीयं भाषा समृद्धा सम्पन्ना चास्ति ।

संस्कृतभाषाया इदमन्यद् गुरुतरं वैशिष्ट्यमस्ति यदस्यामेकस्य शब्दस्यानेके समानार्थाः सन्ति । इदं वैशिष्ट्यं नह्यन्यत्र दृश्यते । अस्या व्याकरणमप्यनुपमम् । एतच्च प्रमाणयति यत् परःसहस्रवर्षेभ्यः प्रागपीयं भाषा चरमां समृद्धिमभजत । अस्या वैज्ञानिकवर्गीकरणेनापीदं प्रमीयते ।

ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदश्चेति चत्वारो वेदाः, आयुर्वेदः, धनुर्वेदः, गन्धर्ववेदः, अर्थशास्त्रश्चेति चत्वारः उपवेदाः, ब्राह्मणग्रन्थाः, आरण्यकग्रन्थाः, उपनिषदश्च संस्कृते एव संगृहीताः सन्ति । वेदाः अखिलज्ञानविज्ञानकोशाः सन्ति । तेषु कर्मणाम् , उपासनायाः, ज्ञानस्य च सविस्तरं वर्णनं विद्यते । विश्वस्मिन् किमपि वेदितव्यं वस्तु नास्ति, विवेचनं वेदेषु नोपलभ्येत । आर्याणां धर्मस्य, संस्कृतेः, यस्य सभ्यतायाश्च, अखिलधर्मसंप्रदायानां ग्रन्थरत्नानां च सम्यग्विवेचनं वेदादिसंस्कृतभाषाग्रन्थेष्वेव निहितं विद्यते । तेषां परिज्ञानार्थम् अमरवाण्याः स्वाध्यायः अत्यन्तमावश्यकः । वेदानाम् अतीवगहनत्वेन तेषां ज्ञानार्थं बहूनि शास्त्राण्यपेक्ष्यन्ते । तेषां मुख्यानि—शिक्षा, कल्पः, व्याकरणम् , निरुक्तम्, छन्दः, ज्यौतिषञ्चेति षड् वेदाङ्गानि कथ्यन्ते ।

चरकसुश्रुतवाग्भटादयः बहवः महत्त्वपूर्णाः आकरग्रन्थाः आयुर्वेदस्य अनुपमं गौरवं स्थापयन्ति । अष्टमशताब्द्याम् एषां ग्रन्थानाम् अनुवादेन अरबदेशनिवासिनः सम्यक्परिचिताः आसन् । रसायने इव शल्यचिकित्सायामपि आर्याणां समुन्नतिः अत्यन्तम् आश्चर्यकारिणी इति अल्फेस्टनमहोदयः इतिहासे प्रमाणयति ।

धनुर्वेदे विविधानां दिव्यानाम् अस्त्राणां शस्त्राणां च

सरहस्यस्य उपयोगस्य सविस्तरं विवेचनं विद्यते । गन्धर्व-वेदः सम्पूर्णायाः सङ्गीतविद्यायाः अगाधसागरः । अर्थ-शास्त्रे च धनस्य आयव्यययोः विधेः, स्थापत्यविद्यायाः, गृहनिर्माणविद्यायाः, तथा अन्यासाम् उपयोगिनीनां कला-नाम् वर्णनमस्ति। समस्तमानवजातेः दैहिक-दैविक-भौतिक-तापानां शान्तये महर्षिभिः रचितानि दर्शनशास्त्राणि महर्षीणां कठिनतमतपसः, गम्भीरविचारस्य, दीर्घकालिक-समाधेश्च फलानि सन्ति ।

महर्षिवाल्मीकि-व्यास-वशिष्ठ-मनु-पराशरप्रभृतिभिः प्रणीतानि रामायण-महाभारत-स्मृति-धर्मशास्त्राणि धर्मस्य, सदाचारस्य, व्यवहारनीतेः, आदर्शशिक्षायाः निधानानि एव सन्ति । भासकालिदासभवभूतिप्रभृतिभिः महाकविभिः निर्मितानां रघुवंशशाकुन्तलोत्तररामचरितादीनां महाकाव्य-नाटकानाम् अध्ययनेन यादृशः लोकोत्तर आनन्दः अनु-भूयते तादृशः अलभ्य एव भाषान्तरग्रन्थस्याध्ययनेन । किं बहुना एकैव श्रीमद्भगवद्गीता, एकमेव भागवतम्, एकमेव वा रामायणं विश्वसाहित्यापेक्षया संस्कृतसाहित्यस्य श्रेष्ठत्वं समर्थयितुं पर्याप्तं, का कथा अन्येषां परःसहस्रग्रन्थ-रत्नानाम् ?

नहि केवलमस्मदीयाः एव धर्मग्रन्थाः संस्कृते लिखिताः सन्ति, परं जैनानामपि ग्रन्थानां बहुलोंऽशः संस्कृतभाषा-

यामेवास्ते । बौद्धा अपि पालीभाषायाः मोहं परित्यज्य संस्कृतमन्वसरन् ।

विदेशेष्वपि संस्कृतस्य महान् प्रचारः पुरा आसीत् । यवद्वीप ( जावा ), सुमात्रा, बकुलद्वीप ( बोर्नियो ), सुवर्णद्वीप ( मलाया ), बलिद्वीप ( बालि ), कम्बुज ( कम्बोडिया ), ब्रह्मदेश ( बर्मा ) प्रभृतिषु सुदूरपूर्व-देशेषु संस्कृतस्य सार्वत्रिकः प्रचार आसीत् । अद्यत्वेऽपि जर्मन-रूस-चीन-इंगलैण्ड-प्रभृतिषु देशेषु संस्कृतभाषा-ग्रन्थाः अनूद्यन्ते, प्रचार्यन्ते, अभिनीयन्ते, सम्मान्यन्ते च ।

अतः भारतवर्षस्य, विश्वस्य च अखिलप्राणिनां कल्याणाय, तापत्रयशमनाय च संस्कृतसाहित्यस्य संरक्षणे, प्रचारे च सर्वैरेव भारतीयैः महान् प्रयत्नो विधातव्यः । सत्यमेवाभ्यधायि कैश्चित्—

भाषासु मुख्या मधुरा शुद्धा संस्कृतभारती ।
तस्याः संसेवनेनैव श्रेयः प्रेयश्च सेत्स्यतः ॥

**प्रश्नाः**

१. संस्कृतभाषा काः भाषाः अतिशेते ?
२. संस्कृतस्य देशविदेशयोः प्रचारे को हेतुः ?
३. राष्ट्रभाषां पोषयितुं का समर्थाऽस्ति ?
४. हिन्दीभाषा कुतः शब्दान् गृहीत्वा आत्मानं पूरयति ?

५. काभिः दृष्टिभिः संस्कृतस्य अध्ययनम् आवश्यकम् अस्ति ?
६. वेदानाम्, उपवेदानाम्, वेदाङ्गानाम् च कानि नामानि ?
७. वेदेषु किं वर्णितमस्ति ?
८. अल्फेस्टनमहोदयः किं प्रमाणयति ?
९. अर्थशास्त्रे, दर्शनशास्त्रे च केषां वर्णनमस्ति ?
१०. संस्कृतसाहित्यस्य श्रेष्ठत्वे कानि तत्त्वानि साधकानि सन्ति ?
११. विदेशे कुत्र कुत्र संस्कृतस्य प्रचारः आसीत् अस्ति च ?



## छात्र-धर्मः

विद्यायाः ज्ञानस्य अलौकिकशक्त्या अनुपमलाभेन च नाधुनाऽपरिचितो दरीदृश्यते कश्चन सज्जनः। दीर्घे अमूल्ये चास्मिन् जीवने प्रतिपदं ज्ञानस्य विद्यायाश्च अनिवार्या आवश्यकतानुभूयते मानवैः। ज्ञानं विना मानव-जीवनं निर्जीवं प्रकाशशून्यं पशुजीवनवत् विवेकशून्यं च प्रतिभाति। ज्ञानालोकेनैव हिताहितयोः, कार्याकार्ययोः, सत्यासत्ययोश्च यथार्थविवेकं लब्ध्वा हितस्य कर्तव्यस्य, सत्यस्य च ग्रहणं तथा अहितस्य, अकार्यस्य, असत्यस्य च परित्यागं कर्तुमर्हति मानवः। ज्ञानमेव पश्वाद्यपेक्षया प्रमुखो गुणः मानवानाम्। सृष्टिकालादारभ्य अद्यपर्यन्तं सर्वेऽपि ज्ञानस्य महिमानं उद्घोषयन्ति। अतः एतादृशस्य ज्ञानस्य अर्जनाय, लाभाय सर्वदा सर्वथा च प्रयत्नशीलैः जिज्ञासुभिश्च भवितव्यं छात्रजनैः।

मानवजीवनेऽस्मिन् गुरुतमं सौख्यं छात्रजीवने एव लभ्यते। चिन्ता-राक्षसी भीत्येव जीवनेऽस्मिन् न प्रविशति। हर्षविह्वलानां छात्राणां कूर्दमानं समूहं दृष्ट्वा कस्य चित्तं न स्पृहयते एषां जीवनाय। तथापि छात्राणां बहूनि कर्तव्यानि सन्ति। यतो हि छात्र-जीवनमेव आगामिजीवनस्य मूलम्।

विद्याध्ययनं हि छात्राणां मुख्यं कर्तव्यमस्ति। परं शरीरस्य, मस्तिष्कस्य, मनसः, आत्मनश्च विकासोऽप्यनिवार्य एव। एषां मध्ये एकस्याप्यविकासो न समुचितः यतो वास्तविकं विद्याध्ययनं तु एषां विकासेनैव जायते।

'यावज्जीवमधीते विप्रः' इत्युक्तदिशा यद्यपि समस्ते एव जीवने ज्ञानार्जनाय उद्योगः आवश्यकः तथापि पञ्चवर्षानन्तरं पञ्चविंशतिवर्षाणि यावत् इतराणि समस्तानि कार्यजातानि विहाय मुख्यरूपेण विद्योपार्जन एव विधातव्यः विद्यार्थिवर्गैः। एष समयः 'ब्रह्मचर्याश्रम' नाम्ना व्यवह्रियमाणः आसीत् महर्षिभिः। अयमेव कालः साम्प्रतं छात्रजीवनमभिधीयते।

ब्रह्मचर्यपालनपूर्वकं परमेश्वरस्य गुरूणां च उपासनां कुर्वन्तः सर्वेभ्यः एव सांसारिकविषयेभ्यः स्वाध्यायविरोधिभ्यः इन्द्रियाणि, मनः बुद्धिं च निरुध्य विद्यार्जने एव संलग्नाः भवेयुः विद्यार्थिनः। ज्ञानार्जनाय, सदाचारशिक्षणाय, कोमलायां हृदयभूमौ सद्विचारबीजवपनाय च अयमेव सर्वोत्तमः कालः। अस्मिन् समये छात्राणां हृदयं मृदु, साधुशिक्षां ग्रहीतुं योग्यं च भवति। अस्मिन् जीवने ये सद्भावाः अङ्कुरिताः भवन्ति ते एव पश्चात् पल्लविताः पुष्पिताः फलिताश्च जायन्ते। 'यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत्।' छात्रा एव भाविनः नागरिकाः, स्वकीयज्ञानालोकेन सदा-

चारेण सदुपदेशेन च राष्ट्रस्य समाजस्य च उद्धारकाः भविष्यन्ति। आदर्शविद्यार्थिनः एव राष्ट्रस्य दारिद्र्यस्य, अज्ञानस्य, अकर्मण्यतायाश्च अपहारकाः भविष्यन्ति। छात्रैः शरीरेण बलिष्ठैः, मनसा पवित्रैः, बुद्ध्या दृढनिश्चयैः, सर्वतोभावेन देशभक्तैश्च भाव्यम्।

विद्यार्थिनां प्रधानेषु गुणेषु गण्यते परमेश्वरे, गुरुषु, विद्वत्सु, अभिभावकेषु च श्रद्धातिशयः; तेषां शिक्षणे उपदेशे च दृढविश्वासः। पूर्णरूपेण निर्दोषस्तु भगवानेवास्ति। अतः मातापित्रोः, गुरूणां च दोषान्वेषणं विहाय तेषां गुणा एव द्रष्टव्याः ग्रहीतव्याश्च छात्रैः।

आलस्यं हि छात्राणां महान् रिपुः। अस्य मधुरं तानं श्रुत्वा छात्रास्तन्द्राधीनाः सन्तः स्वकीयममूल्यं समयं वृथा यापयन्ति। इत्थं ते स्वलक्ष्यं प्राप्तुं न प्रभवन्ति। छात्रजीवनस्य प्रत्येकं क्षणमनर्घमस्ति। तस्य वृथा यापनेन लक्ष्यप्राप्तिः कथं सम्भवति ? 'सुखार्थिनः कुतो विद्या, सुखं विद्यार्थिनः कुतः।'

इन्द्रियाणां निग्रहणं छात्रैः कर्तव्यमेव। इन्द्रियैः पराजितास्छात्राः कदापि साफल्यं नाधिगच्छन्ति। तपश्चरणमेव विद्यार्थिजीवनस्य मूलमन्त्रः। विश्वस्य अनेकेषां महापुरुषाणां विद्यार्थिजीवनं तपश्चरणस्य निदर्शनम्। सौख्यैर्विताडितैरपि तैर्महता क्लेशेन विद्योपार्जिता।

गुरुभक्तिस्तु छात्रजीवनस्य अनिवार्यमङ्गम्। गुरुभक्तिं विना न कोऽपि छात्रो विद्योपार्जनं कर्तुं क्षमः। अर्जितापि तस्य विद्या साफल्यं न लभते।

'श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः।'
'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।'
'गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा।
अथवा विद्यया विद्या चतुर्थं नैव कारणम्॥'
'यथा खनन् खनित्रेण नरो वार्यधिगच्छति।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति॥'

इत्यादि शास्त्रवचनानि सदैवानुसर्तव्यानि छात्रैः।

मितव्ययितापि छात्राणामन्यद् गुरुतरं कर्तव्यमस्ति। बहवोऽभिभावकाः प्रेमाभिभूताः सन्ततीनामुच्चशिक्षणार्थं स्वकीयं सर्वस्वं व्ययीकर्तुं सदैव सन्नद्धाः दृश्यन्ते। परं छात्रास्तेषां धनानि निरनुक्रोशतया व्ययन्ते। नह्यन्यः कश्चिद् गुरुतरो दुर्गुणोऽस्मात्।

स्वदेशस्य अभ्युत्थानाय, समाजोद्धाराय च आत्मानं योग्यं कर्तुम् अध्ययने, स्वास्थ्यरक्षणे, चरित्रनिर्माणे च महान् यत्नो विधातव्यश्छात्रैः। दुराचारिपुरुषाणां सङ्गात्, दूषितग्रन्थानाम् अध्ययनात्, दुराचारवर्धकानां, सदाचार-विरोधिनां, विलासितापोषकाणां, चित्रपटादीनां दर्शनात्,

अश्लीलनृत्यगीताच्च भयङ्करात् सर्पात्, विषादपि च अधिकं भेत्तव्यं विद्यार्थिभिः ।

अध्ययनानन्तरं कार्यान्तरेषु व्यापृता अपि आदर्श-ग्रन्थानां स्वाध्यायात् तथा अधिकारिभ्यः जिज्ञासुभ्यः विद्याप्रदानाच्च न प्रमाद्येयुः विद्याप्रेमिणः विद्यार्थिनः ।

अनुशासन-नियन्त्रण-समयनिष्ठा-पुरुषार्थोदारता-सत्य-वादिता-निर्भयता-देशभक्ति-विनोदप्रियता-प्रभृतिभिः गुणैः अन्तेवासिनां जीवनं रत्नवत् चकासितुमर्हति ।

**प्रश्नाः**

१. कस्मिन् जीवने गुरुतमं सौख्यं लभ्यते ?
२. छात्रेषु कानि कर्तव्यानि अपेक्षितानि ?
३. छात्रेषु के गुणाः वाञ्छिताः सन्ति ?
४. छात्राणां को महान् रिपुः ?
५. छात्रजीवनस्य कः मूलमन्त्रः ?
६. छात्रजीवनस्य किम् अनिवार्यम् अङ्गम् ?
७. छात्रैः किमर्थं महान् यत्नो विधातव्यः ?
८. अतिरिक्तसमयेषु छात्रैः किं किं करणीयम् ?
९. कैर्गुणैः छात्राणां जीवनं रत्नवत् चकासितुमर्हति ?



# महामना: मदनमोहनमालवीयः

भारतवर्षस्य पारतन्त्र्यहाने, स्वातन्त्र्यविधाने च प्राणपणेन प्रयत्नशीलानां देशनायकानां मध्ये महामनसः



श्रीमदनमोहनमालवीयस्य सर्वश्रेष्ठं स्थानं मन्यते। देशस्वाधीनतायाः इतिहासे तस्य नामधेयं स्वर्णाक्षरैः लिखितम् अस्ति। आर्यदेशस्य सर्वाङ्गीणसमुत्थाने सर्वैः प्रकारैः तेन महान् प्रयत्नः कृतः। प्रायः सर्वास्वेव देशोद्धारिणीषु समाजकल्याणकारिणीषु संस्थासु तस्य करावलम्बनम् आसीत्। स यामेव संस्थां प्रविष्टवान्

तामेव पल्लवितां, पुष्पितां, फलितां च कृतवान् । स न केवलः राजनीतिको नेता आसीत् अपितु समाजोद्धारकः, धर्माचार्यः, विद्यागुरुः, मुनीनाम् ऋषीणाम् च परम्परायाः अन्तिमः ऋषिः । सः करुणायाः, प्रेम्णः, सौहार्दस्य च अवतार एवासीत् । कस्यापि महत्कष्टं दृष्ट्वा स मुक्तकण्ठम् अरोदीत् । स्वकीयं सर्वस्वं समर्प्य अपि तस्य कष्टनिवारणाय प्रयत्नमकार्षीत् ।

श्रीमालवीयमहाराजस्य सेवाकार्याणि अनन्तकालपर्यन्तं देशवासिनां मनःसु सुदृढं पदं करिष्यन्ति । हिन्दूविश्वविद्यालयः, हिन्दीसाहित्यसम्मेलनम्, राष्ट्रियकांग्रेससभा, गोसेवासङ्घः, हिन्दूमहासभा, सनातनधर्मसभा, भारतीयस्वदेशिसंघः, इत्यादयः तस्य प्रियसंस्थाः आसन् । आसु सर्वास्वेव सर्वोच्चपदे स आसीद् विराजमानः तथा तासां संरक्षणे, संवर्धने च तेन स्वजीवनस्य अमूल्यसमयः समर्पितः । 'न केवलेन राजनीतिकस्वातन्त्र्यलाभेनैव राष्ट्रस्य वास्तविकम् उत्थानं भवितुमर्हति, अपितु धर्मस्य, संस्कृतेः, साहित्यस्य च संरक्षणम् अत्यन्तम् आवश्यकम्' इति अमन्यत महामनाः । तस्यायं दृढविचारः आसीद् यद् आर्यसंस्कृतेः आर्यसभ्यतायाश्च प्रभावेणैव स्वदेशस्य, विश्वस्य च वास्तविकं कल्याणं भवितुम् अर्हति । गोरक्षणं विना लब्धेऽपि

स्वातन्त्र्ये देशस्य कल्याणम् असंभवीति महात्मागान्धिवत् तस्याप्यासीद् दृढा धारणा।

एकषष्ट्यधिके अष्टादशशततमे ईशवीये वर्षे दिसम्बर-मासस्य पञ्चविंशत्तिथौ ( २५-१२-१८६१ ) तीर्थराजे प्रयागे स अवातरत्। तस्य पिता श्रीपण्डितब्रजनाथः संस्कृतसाहित्यस्य विशिष्टो विद्वान्, श्रीमद्भागवतादि-पुराणादीनाम् अद्वितीयो व्याख्याता च आसीत्। तस्य व्याख्यासरणिः अतीव मधुरा मनोहारिणी च अभवत्। श्रीकाशिराजः दरभंगानरेशश्च तम् अतिसम्मानदृष्ट्या अपश्यताम्। संस्कृतविद्याप्रेमी पिता महामनसं संस्कृतं अध्येतुम् धर्मज्ञानोपदेशपाठशालां प्रवेशितवान्। तत्र संस्कृत-साहित्यमधीत्य अनन्तरं स आंग्लविद्यालयम् अध्ययनार्थं प्रविष्टवान्। ततः प्रवेशिकापरीक्षाम् उत्तीर्य सेन्ट्रल-कालेजनामके महाविद्यालये नामोल्लेखं कारितवान्। ततः बी० ए० परीक्षामुत्तीर्य गैहिकेन आर्थिकसंकटेन एम० ए० कक्षायां पठितुं समर्थो नाऽभूत्। विवशो भूत्वा स राजकीये आंग्लविद्यालये पञ्चाशद्रूप्यकवेतनेनैव अध्यापनकार्यमारब्धवान्।

अनन्तरं कालाकाङ्कराज्यस्य अधीश्वरः श्रीरामपाल-सिंहः स्वप्रवर्तितस्य हिन्दुस्थाननामकस्य पत्रस्य सम्पाद-नाय महामनसं प्रार्थितवान्। तस्य प्रार्थनया अध्यापनं

परित्यज्य स शतद्वयरूप्यकवेतनेन तस्य पत्रस्य अतीव-योग्यतया सम्पादनकार्यं कृतवान्। तस्य सुचारुणा कार्येण शासकाः, प्रजाः, सर्वे एव प्रसन्नाः अभवन्। तदनन्तरं श्रीपण्डित-अयोध्यानाथस्य अनुरोधेन 'इण्डियन ओपीनियन' नामकस्य पत्रस्य सम्पादनं कर्तुमारभत। प्रजावर्गस्याकाङ्क्षां शासकानां सन्निधौ निर्भीकतया उपस्थापितवान्। मालवीयमहाराजस्य प्रयत्नेनैव 'अभ्युदय' नाम्नः हिन्दीपत्रस्य 'लीडर'नाम्नः आंग्लपत्रस्य च जन्म अभूत्। ताभ्यां जनतायाः महान् उपकारः संसाधितोऽभूत्।

श्रीपण्डित-अयोध्यानाथस्य, श्रीरामपालसिंहस्य, श्रीसुन्दरलालस्य च अनुरोधेन अनिच्छन्नपि प्राड्विवाककार्यं ( वकालत ) प्रयागस्थे प्रधानन्यायालये कर्तुम् आरब्धवान्। अद्वितीयप्रतिभासम्पन्नोऽपि निर्वाहार्थमेव विधानकार्यं कुर्वन् अधिकसमयं शक्तिं च देशसेवाकार्ये एव उपयुक्तवान्। षडशीत्यधिके अष्टादशशततमे ईशवीये वर्षे ( १८८६ ) राष्ट्रियकांग्रेससभायाः द्वितीयं वार्षिकाधिवेशनं कलिकातानगरे सम्पन्नम्। तत्र श्रीमालवीयजीमहाराजस्य व्याख्यानम् अत्यन्तं प्रभावशालि, मनोहारि विद्वत्तापूर्णं च सञ्जातम्। मधुरः कण्ठः, स्पष्टम् उच्चारणम्, ओजस्विनी भाषा च तस्य व्याख्यानस्य मुख्याः गुणाः आसन्। स्वदेशीयाः विदेशीयाश्च सर्वे एव महान्तो विद्वांसः

विस्मिताः मन्त्रमुग्धाः इव भूत्वा तस्य भूरिशः प्रशंसाम् अकार्षुः । ततः सर्वेष्वेव राष्ट्रियसभायाः अधिवेशनेषु तस्यैव व्याख्यानं सर्वापेक्षया अधिकमहत्त्वपूर्णं प्रभावोत्पादकं च अमन्यत । नवाधिके ऊनविंशतिशततमे ईशवीये वर्षे ( १९०९ ) कांग्रेससभायाः वार्षिकाधिवेशने महामनाः एव सभापतिपदम् अलङ्कृतवान् । द्व्यधिके ऊनविंशतिशततमे ईशवीये वर्षे ( १९०२ ) विधानसभायाः सदस्योऽपि स निर्वाचितोऽभूत् शासकैः । तत्रापि स प्रजावर्गस्य न्यायपक्षस्य प्रबलया युक्त्या समर्थनं कृतवान् ।

स्वदेशीयवस्तूनां स्वीकारे, विदेशीयवस्तूनां बहिष्कारे च सर्वेषामेव देशनायकानाम् अग्रगण्य एव आसीत् महामनाः । स्वदेशीयवस्तूनाम् प्रचारार्थम् एकाशीत्यधिके अष्टादशशततमे ( १८८१ ) ईशवीये वर्षे भारतीयव्यवसायसमितिं स्थापितवान् । सप्ताधिके ऊनविंशतिशततमे ( १९०७ ) ईशवीये वर्षे संयुक्तप्रान्तीयव्यवसायसमितिं च सङ्घटितवान् । इत्थं स्वदेशीयव्यवसायस्य समुत्थाने महान्तं प्रयत्नम् अकरोत् । समाजसेवाकार्येऽपि तस्य असाधारण एव उद्योगः अभूत् । प्रयागे साहित्यिकसमितिरपि तेनैव स्थापिता आसीत् । प्रयागे प्रसृतस्य मूषकमारी ( प्लेग ) प्रकोपस्य निवारणे जनपदाधीशेन फेण्डसहोदयेन सह महामनसा प्रशंसनीयं कार्यं कृतम् ।

पञ्जाबहत्याकाण्डस्य समये या सेवा तेन कृता सा न कस्याप्यविदितास्ति । चौरा-चौरीकाण्डेऽपि स्वयं बहूनि कष्टानि सोढ्वापि तेन बहूनां भारतीयानां प्राणरक्षा कृता ।

सनातनधर्मः वैदिककर्मकाण्डश्च तस्य जीवनम् आस्ताम् । परमेश्वरे धर्मे च तस्य अचला श्रद्धा आसीत् । शालग्रामो भगवान्, श्रीमद्भागवतग्रन्थश्च तस्य सर्वत्रैव सङ्गिनौ अभवताम् । समये समये भागवतस्य भगवद्गीतायाश्च कथामपि स अश्रावयत् । तस्यैव प्रेरणया हिन्दूविश्वविद्यालये संस्कृतस्य धर्मस्य च शिक्षा अनिवार्या विद्यते । प्रयागहिन्दूछात्रावासः तस्य प्रबलेन प्रयत्नेनैव स्थापितः । असाधारणेन अध्यवसायेन भारतस्य, भारतीयानां च कीर्तिस्तम्भं हिन्दूविश्वविद्यालयं संस्थाप्य हिन्दूसंस्कृतिं, हिन्दूगौरवं च अमरं कृतवान् मालवीयमहाराजः । राष्ट्रस्य, समाजस्य, धर्मस्य, शिक्षायाश्च समुत्थानाय यावन्ति कार्याणि कृतानि महामनसा नान्येन केनापि नेत्रा तावन्ति कृतानि, करिष्यन्ते वेति निर्विवादम् ।

षट्चत्वारिंशदधिके ऊनविंशतिशततमे ईशवीये वर्षे ( १९४६ ) नवम्बरमासे नोआखालीस्थहिन्दूनां दारुणां दुःखघटनां श्रुत्वा विदीर्णं तस्य कोमलं हृदयम्, अस्तंगतश्च भारतवर्षस्य सौभाग्यसूर्यः । तस्य निम्नाङ्कितः

अमरः सन्देशः श्रद्धया प्रेम्णा च अनुसरणीयः अभ्युदयाभिलाषिभिश्छात्रैः—

सत्येन ब्रह्मचर्येण व्यायामेनाथ विद्यया ।
देशभक्त्यात्मत्यागेन सम्मानार्हः सदा भव ॥

प्रश्नाः

१. मालवीयस्य काः विशेषताः ?
२. काः संस्थाः तस्य प्रियाः आसन् ?
३. महामनाः किं अमन्यत ?
४. तस्य का धारणा आसीत् ?
५. मालवीयस्य बाल्यजीवनं छात्रजीवनञ्च कीदृशे आस्ताम् ?
६. मालवीयः कानि पत्राणि समपादयत् ?
७. मालवीयः कदा कथं च प्राड्विवाककार्यं प्रारब्धवान् ?
८. कदा, कुत्र, कीदृशञ्च महामनसः प्रथमं व्याख्यानम् अभूत् ?
९. काः संस्थाः मालवीयः स्थापितवान् ?
१०. केषां समुत्थानाय कानि च महामनसा कार्याणि कृतानि ?
११. कदा कथं च सौभाग्यसूर्योऽयं प्रतीचीमुपगतः ?
१२. महामनसः कः सन्देशः अस्माभिः अनुसर्तव्यः ?

# विद्याध्ययनम्

शीलं परहितासक्तिरनुत्सेकः क्षमा धृतिः ।
अलोभश्चेति विद्यायाः परिपाकोज्ज्वलं फलम् ॥

विद्याशब्दो ज्ञानार्थाद् विद्धातोः साध्यते । एवञ्च कति-



पयानां वाक्यानां गणितप्रकाराणां वैज्ञानिकाविष्काराणां वा ज्ञानं विद्येति वक्तुं पार्यते । परम् ईदृशार्थसमर्थनं सङ्कुचित-वाच्यतामस्य शब्दस्य प्रकाशयेत् । अतश्च यया मनुष्यस्य

सुप्ताः स्वाभाविक्यः शक्तयः बोध्येरन्, लौकिकपारलौकिकविषयाणां वास्तविकं ज्ञानं चोत्पाद्येत सा विद्येति परिभाषाम् आद्रियन्ते विद्वांसः। वस्तुतत्त्वमीमांसयापि न केवलं कस्यचिद्ग्रन्थस्य कण्ठस्थीकरणं तदर्थावगममात्रं वा विद्यां वक्तुमुत्सहामहे, अनग्नौ हुतस्येव तावतो ज्ञानप्रागभावस्याकार्यकरत्वात्। ईश्वरो हि सहजया स्वया दयया ( पुरुषकृतेन श्रमेण ) तदन्तःस्थितां तदीयां शक्तिं बोधयति सैव वास्तविकी विद्येति विज्ञः। अध्ययनमात्रस्यापि तदुद्भावकतया कार्यकारणयोरभेदमुररीकृत्य तथासंज्ञाकरणम्।

मनुष्याणां हृदये अन्धतमसावृते बहुविधा नानाविषयाश्च शक्तयस्तिष्ठन्ति। ताः न स्वतः प्रकाशन्ते। विद्यया दूरीकृते तस्मिन् तमसि तेजोऽवरोधिनि, तास्ताः शक्तयः प्रकाशमासाद्य पुमांसं प्रतिष्ठामानयन्ति। तेनैव च प्रकाशेन मनुष्याणां शीलं शुद्ध्यति, स्वभावो विवेकभाग् भवति, चरित्रं चारुतामञ्चति, वार्तालापः परिपक्वप्रबोधो भवति। येषां विषयाणां ज्ञानं मूर्खाः मनुष्याः शतवत्सरमितकालेनापि नाशासते, तानेव विषयान् विद्वांसः क्षणेन प्रत्यक्षेणेक्षन्ते। आश्चर्यकरं धूमयानं ( रेल ), तडित्प्रवाहं ( तार ), धूमजलयानादि ( जहाज ), विविधचमत्कारि वस्तुजातं च विद्याबलेनैव लोकाः आविरकार्षुः। अद्यापि

यासु जातिषु विद्या नास्ति ता वनेषु वसन्ति । विद्याबलेनैव लोकाः भूमिनिखातं रत्नमासाद्य धनिनो जायन्ते । विद्यैव परदेशस्थितस्य प्राणेभ्योऽपि प्रियतमस्य पत्रं द्वारीकृत्य अधिमग्नां सततरुदितोच्छूननेत्रां तत्प्रियामाश्वासयति । विद्यैव चात्रापि निदानं यद्वयं रामं कृष्णं च स्मरामः, इतिहासप्रसिद्धेभ्यः पुरुषधौरेयेभ्यश्च स्वान् आदरोपनतश्रद्धाञ्जलीनुपहरामः । यो ह्यनया भूषितस्तस्यान्येषु भूषणेषु वृथा प्रयासः—'विद्या परं भूषणम्', 'विद्यारूपं कुरूपाणाम्' इत्यादि चाहुः प्राञ्चः । अहार्यत्वात् अनर्घ्यत्वात् सर्वदा अक्षयत्वाच्च विद्यैव सर्वद्रव्येषु अनुत्तममभिहितम् । विद्यायाः विप्रतीप एव कोशः यः खलु व्ययतः वृद्धिम् आयाति, संचयतः क्षयमायाति । विद्या एव सर्वधनानां मूलम् । विद्येयं कामधेनुगुणा, अकाले फलदायिनी, प्रवासे मातृसदृशी भवति । विद्या एव अनेकसंशयच्छेदिका, परोक्षार्थस्य दर्शिकास्ति । येन विद्याबलमर्जितं स स्वां कीर्तिममरीकृत्य जनान्तरवन्न लोकानां ज्ञानाध्वनोऽपयाति । किञ्च स न केवलमात्मानममरत्वमापयति किन्तु यस्य तथात्वाय यतते, तमेव तथाभूतं विदधाति । वाल्मीकिविद्यैव रामचन्द्रमधुनापि गीयमानचरित्रं करोतीत्यपि किं प्रमाणमर्हति ?

यो हि विद्यामर्जितवान् न स कदाचिदपि जाठर-

ज्वालया दह्यते, तदा सदाश्रिता विद्या तदुदरपूर्तये प्रबध्नाति । यथाहुः—

'श्रुतेन यत्नेन च वागुपाश्रिता,
ध्रुवं करोत्येव कमप्यनुग्रहम्' ।

विद्या हि चौरैर्नापह्रियते, राज्ञा नादीयते, प्रकृतिप्रकोपकृतोपद्रवैर्न हीयते, भ्रातृभिश्च न विभज्यते इति हि सर्वसम्मतमेव ।

विद्यायाः असाधारणं महिमानं सर्वेष्वेव देशेषु विशेषतः पाश्चात्त्येषु सर्वैरेव मानवैः ऐकमत्येन स्वीकृत्य तस्याः प्रचारार्थं प्रबलः प्रयत्नः कृतः, क्रियते च निरन्तरम् । येषु देशेषु संजातः विशेषरूपेण विद्यायाः विस्तारः ते एव साम्प्रतं समुन्नतेः शिखरमारूढाः सुपथप्रदर्शकाश्च अन्येषां देशानाम् । विद्यायाः शक्त्या तद्देशवासिनां मस्तिष्कं विकसितं, कार्यमकार्यं वा निर्णेतुं समर्थं च संजातम् । ते समक्षम् उपस्थितां राजनीतिकीम्, सामाजिकीम्, आर्थिकीम् च अतीवजटिलामपि समस्यां स्वबुद्धिवैभवेन सुधारयितुम् अनायासमेव भवन्ति समर्थाः । नवीनया वैज्ञानिकरीत्या कृषिकर्मणः समुन्नत्या अधिकम् अन्नमुत्पाद्य अन्नप्रदानेन अन्यदेशवासिनामपि समये समये साहाय्यं विदधति । नूतनयन्त्राणाम् उपयोगेन अधिकपरिमाणे वस्त्राणि, उपयोगीनि औषधानि, लौहयन्त्रादीनि च निर्माय तेषां विदेशेषु विक्रयेण सम्पन्नाः समृद्धाश्च दृश्यन्ते ।

प्राचीनसमये समस्तानां देशानां शिक्षकः विद्यागुरुरपि अस्माकं भारतवर्षदेशः साम्प्रतं विद्यायाः प्रचारेण रहितः शोचनीयां दशामुपगतः। वैदिकयुगे, बौद्धसाम्राज्यकाले, यवनशासनसमयेपि विद्यया, ऐश्वर्येण, बलेन च समृद्धमपि स्वदेशम् इदानीम् दारिद्र्येण, नैष्कर्म्येण, अज्ञानेन च परिपूर्णं विलोक्य कस्य सचेतसः स्वदेशभक्तस्य हृदयं व्यग्रं शोकनिमग्नं च न भवेत्! सर्वेषां दुःखानां, सर्वासाम् आपदाम्, समस्तानाम् अवनतीनाञ्च मूलकारणम् अविद्यैव। अज्ञाः जनाः न जानन्ति यद् विदेशेषु साम्प्रतं किं जायते, अन्यदेशवासिनः कीदृशीं समुन्नतिम् अधिगताः, राजनीतिककार्ये, सामाजिकविधाने च कीदृशम् उत्थानं ते कृतवन्तः कुर्वन्ति च।

वेदानाम्, उपनिषदां, भगवद्गीतायाः, पुराणानां च स्वाध्यायेन वैदेशिकाः विद्वांसः अलौकिकं ज्ञानं, लोकोत्तरम् आनन्दं च लब्ध्वा स्वकीयं जीवनं धन्यं मन्यन्ते, मुक्तकण्ठं प्रशंसन्ति च अस्माकं पूर्वजानां माहात्म्यम्। महर्षिव्यासवाल्मीकिनिर्मितानि ग्रन्थरत्नानि, भासकालिदासभवभूत्यादिभिः महाकविभिः रचितानि काव्यानि नाटकानि च पठित्वा आनन्दनिमग्नमानसाः सन्तः ते अस्माकं महर्षीणां कवीनां च असाधारणप्रतिभां ख्यापयन्ति। बहुषु देशेषु संस्कृतसाहित्यस्य विशेषतः वेदानाम् अध्ययनं विश्व-

विद्यालयेषु अनिवार्यरूपेण निर्धारितमस्ति । अनेके श्रद्धावन्तश्च उपनिषदां, गीतायाः, रामायणस्य वा नियमेन प्रतिदिनं स्वाध्यायं कुर्वन्तः स्वजीवनं पवित्रयन्ति ।

परन्तु महद्दुःखस्यायं विषयः यत् साम्प्रतम् अस्मद्देशवासिनः अधिकसंख्यायाम् अशिक्षिताः हस्ताक्षरमपि कर्तुम् अजानन्तः जडजीवनं यापयन्ति । संस्कृतसाहित्यस्य उच्चकोटिग्रन्थानां का कथा, हिन्दीसाहित्यस्य रामचरितमानसादीनां ग्रन्थानामपि अध्ययने असमर्थाः कूपमण्डूकवत् संकुचितविचाराः सन्ति अनेके जनाः । एतेषां कृते विद्याध्ययनव्यवस्थायाः अनिवार्यरूपेण विद्यते आवश्यकता । विद्ययैव देशवासिनः प्राचीनकालात् अद्यावधि प्रवाहितस्य, अभिवृद्धस्य च ज्ञानराशेः उपयोगं कृत्वा जीवनं सुसंस्कृतं समृद्धं च कर्तुं शक्नुयुः । स्वदेशीयानां, वैदेशिकानां च साहित्यग्रन्थानां, विज्ञानस्य, इतिहासस्य, भूगोलादिविषयाणां च अध्ययनेन विभिन्नदेशानां राजनीतिं, सामाजिकीम् आर्थिकीं च समुन्नतिं ज्ञात्वा स्वकीयविचारान् उदात्तान् कृत्वा देशवासिनः स्वदेशस्य सार्वभौमम् अभ्युदयं कर्तुं समर्थाः भवेयुः ।

इदमप्यवधार्यं यत् सा चेयं विद्या न केवलं पुस्तकानामध्ययनेन साध्या, तावता तु तस्या भूमिकामात्रं निर्मीयते । प्राकृतस्य संसारस्य पर्यवेक्षणं स्वाधीत-

ग्रन्थजन्यज्ञानकृतविवेकस्योपयोगं च विद्यामभिदध्मः। यद्यधीतवतोऽपि मनसि विवेकः पदं नादधाति, वृथा तदा समारम्भः, किंच सर्वो व्ययो वृथा। यूनानदेशवासी महात्मा शुकरातः नाधिकमधिजगे, परं तदीयो विवेकस्तं भूयसो लोकादरस्य पात्रमकृत। वर्तमानसमयेऽपि लोकतन्त्राधिपः सर्वाधिकजनमानसिकादरभूमिर्महात्मा गान्धीमहोदयो नाधिकाध्ययनप्राप्तगौरवः। पञ्चनदेषु लब्धजन्मा रणजीतसिंहो नाक्षरमपि पर्यचिनोत्, परं सकृत्समग्रमपि भारतमधिकर्तुं स्वप्नमद्राक्षीत्।

अस्याश्च लाभाय सर्वविधोऽपि प्रयत्नो न दुष्यति। स्थानं मानं विगानं वा अस्याः उपलब्धये न विवेचयन्ति सन्तः। स्मर्यतेऽपि—'विद्यामाददीतावरादपि'। ज्ञानमेव वार्धक्यकारणं मन्यमाना बाला अपि वृद्धानध्यापयन्तो यथा वृद्धानपि तान् पुत्रपदेन व्यवजहुः, तदौचित्यं च निरचैषुस्तथा जानन्त्येव साम्प्रतिकाश्छात्राः। एतेन च नराणां बालेभ्योऽपि विद्यालाभसम्भवे तदनादरभीतिनिवर्तकप्रसङ्गेन विद्याया महिमा गीयते। अतोऽधस्तनपद्यानुसारं यथारुचि यथाशक्ति च विद्या शिक्षणीया एव सर्वैः—

विद्या नाम जनस्य कीर्तिरतुला भाग्यक्षये चाश्रयः<br>
धेनुः कामदुघा रतिश्च विरहे नेत्रं तृतीयं च सा।

सत्कारायतनं कुलस्य महिमा रत्नैर्विना भूषणं
तस्मादन्यमुपेक्ष्य सर्वविषयं विद्याधिकारं कुरु ॥

प्रश्नाः

१. विद्यायाः किं फलमस्ति ?
२. का वास्तविकी विद्या ?
३. विद्यया के लाभाः भवन्ति ?
४. विद्यया काः शक्तयः प्रबुद्धाः भवन्ति ?
५. वैदेशिकाः कथम् अस्मत्पूर्वजान् प्रशंसन्ति ?
६. सार्वभौमम् अभ्युदयं कथं भवेत् ?
७. 'विद्यामाददीतावरादपि' इत्यस्य कः आशयः ?
८. विद्याधिकारकरणाय के हेतवः प्रदर्शिताः ?



# भारतस्य राजधानी ( इन्द्रप्रस्थम् : दिल्ली )

'दिल्ली'नगरम् अस्माकं देशस्य राजधानी अस्ति। राष्ट्रस्य सर्वोच्चशासकः राष्ट्रपतिमहोदयः अत्रैव निवसति। अस्माकं देशस्य केन्द्रीयव्यवस्थापिका सभा अस्मिन्नेव नगरे तिष्ठति, या समग्रदेशस्य शासनस्य रक्षादिकस्य च व्यवस्थां करोति। देशे स्वतन्त्रे सति तस्य विधान-निर्माणस्य कार्यं कुर्वती विधानपरिषद् अपि अत्रैव नगरे



अतिष्ठत्। पाण्डवानां समयेऽपि भारतवर्षस्य इदमेव नगरं राजधानी अभवत्। तदा अस्य नगरस्य नाम 'इन्द्र-प्रस्थम्' आसीत्।

इदं विशालं नगरं यमुनानद्यास्तटे वसति। अत्र पूर्वभागे यमुनायाः उपरि एकः लौहमयः सुविशालः सेतुः वर्त्तते, यस्य चत्वारः भागाः सन्ति, यत्रैकेन वाष्पयानानि गच्छन्ति, अपरेण आगच्छन्ति। इमौ द्वौ

भागौ उपरि वर्त्तेते। अनयोरथः अन्यौ द्वौ भागौ तिष्ठतः, ययोरेकः गोयानानाम्, अपरश्च मोटरयानानाम् अश्वयानानाञ्च यातायाताभ्यां वर्त्तते। अत्र राजपुरुषाः कर्मचारिणो रात्रिन्दिवं नियुक्तास्तिष्ठन्ति, ये वारक्रमेण यानानां गमनागमने कारयन्ति। यदि ते एवं न कुर्युः, तर्हि यानानां सौकर्येण गमनागमने न सम्भवेताम्, अवश्यमेव च प्रतिदिनं बहवः दुर्घटनाः भवेयुः।

अत्र नगरे बहूनि दर्शनीयानि स्थानानि सन्ति। येषु पाण्डवानां दुर्गं, शोणदुर्गं, जामामस्जिदं, यन्त्रमन्त्रेति ख्यातं जयपुरमहाराजेन निर्मितं ज्योतिश्चक्रञ्च अतिप्रसिद्धानि सन्ति। ये यात्रिणः व्यापारिणो वा अत्र आगच्छन्ति, ते इमानि स्थानानि अवश्यं पश्यन्ति। एषु प्राचीनभारतीयभवननिर्माणकलायाः अद्भुतं कौशलं लक्षितं भवति।

अस्य द्वौ भागौ स्तः। एकस्य नाम प्राचीनदिल्ली, अपरस्य नाम नवीनदिल्लीति विख्यातमस्ति। प्राचीनदिल्लीतः नवीनदिल्ली सौन्दर्येऽपि भिन्ना एव। नवीनदिल्ल्यामेव राजकीयभवनानि वर्त्तन्ते। अत्रैव नूतनवास्तुकलायाः आदर्शभवनमेकं लक्ष्मीनारायणयोः मन्दिरं वर्तते, यत् 'बिरला'नामकेन प्रसिद्धश्रेष्ठिना निर्मितम्। अत एव च 'बिरलामन्दिर' नाम्ना प्रायः सर्वत्र प्रसिद्धम्।

अत्र सुविशालाः वीथिकाः सन्ति, यासां निर्माणं प्रायः लन्दननगरेण तुल्यं वर्त्तते। अत्र प्रायः महान्तो जनाः स्वस्वबहुमूल्यकोष्ठिकासु निवसन्ति। तेषां वेशभूषा, भाषा, पानाशने सकलापि जीवनचर्या प्रायः पाश्चात्यशैल्या एव वर्त्तते। अत्र भारतवर्षस्य सर्वेषां भूतपूर्वराजानां विश्रामस्थानानि केन्द्रीयमन्त्रिणाञ्च निवासस्थानानि सन्ति। सर्वेषां देशानां दूतावासाश्च वर्तन्ते। प्राचीनदिल्ल्याः वसतिः अतिघना वर्त्तते। अत्र चाँदनीचौक, फतहपुर, दरीबा, कालीहौज, चावडी इत्यादिनाम्ना प्रसिद्धाः सुविशालाः पण्यवीथ्यः सन्ति। यासु आपणिकाः नानाविधानि वस्तूनि विक्रीणन्ति।

इदं नगरम् उत्तरभारतस्य अतिमहद् व्यापारकेन्द्रम् अस्ति। उत्तरप्रदेशस्य पश्चिमजनपदेषु प्राच्यपञ्चनदप्रदेशस्य च बहुषु जनपदेषु राजस्थानस्य च अनेकेषु भागेषु नगराद् बहूनि पण्यवस्तूनि गच्छन्ति। अत्र 'बिरला मिल्स' 'देहलीक्लाथमिल्स' नामके द्वे अतिमहती वस्त्रोत्पादनकेन्द्रे वर्त्तेते, ययोः सहस्रशः कर्मकराः कार्यं कुर्वन्ति।

अस्य नगरस्य जनसंख्या प्रायः दशलक्षेभ्योऽप्यधिका वर्त्तते। अत्र हिन्दवः, मुसलमानाः, ईसामसीयाः, पारसीकाः, इत्यादयः बहुजातीयाः भिन्नधर्मावलम्बिनः जनाः अस्माकं राष्ट्राधिकारिणां सर्वधर्मनिष्पक्षतायाः हेतोः

एकपरिवारीया इव प्रेम्णा निवसन्ति। शिक्षायाः प्रचारोऽपि अत्र समीचीनः अस्ति। भिन्नभिन्नभाषामयानि अनेकानि दैनिक-समाचारपत्राणि, साप्ताहिकानि, पाक्षिकाणि, मासिकानि च अस्मान्नगरान्निःसरन्ति।

अस्मात्त्रयोदशक्रोशार्द्धदूरे 'महरौली' नामकं स्थानं विद्यते। 'कुतुबमीनार' नामकः एकः पाषाणमयः गगनचुम्बी स्तम्भो वर्त्तते। दर्शकाः इमं स्तम्भं महता आश्चर्येण पश्यन्ति, यत् एवंविधाः सुमहत्यः शिलाः केन प्रकारेण एतावदूर्ध्वं प्रापिता इति। अस्य नातिदूरे एव एका अतिगभीरा गन्धकवापी तिष्ठति। यस्यां गन्धक-गन्धि, गन्धकसवर्णम् एव अगाधजलं परिपूर्णं विद्यते। अस्यां जलप्रवेशकुशलाः जनाः दूरतो धावन्तः उच्चस्थानात् उत्प्लुत्य कूर्दन्ते। इत्थञ्च यात्रिणाम् आश्चर्यम् उत्पाद्य तेभ्यः पुरस्कारं गृह्णन्ति। तेषाम् अयं धनोपार्जनोपाय एव वर्त्तते।

ईदृशम् अतिगौरवमयम् आश्चर्यमयञ्च इदम् इन्द्रप्रस्थनामकं नगरं भारतीयैरवश्यमेव दर्शनीयम् अस्ति।

**प्रश्नाः**

१. स्वतन्त्रभारतस्य काः परिषदः इन्द्रप्रस्थे सन्ति ?
२. इन्द्रप्रस्थः कुत्र स्थितः अस्ति ?
३. इन्द्रप्रस्थे कानि कानि स्थानानि मनोहराणि दर्शनीयानि च सन्ति ?

४. इन्द्रप्रस्थं कथं प्रसिद्धमस्ति ?

५. इन्द्रप्रस्थस्य जनसंख्यां वदत ।

६. कीदृशानि समाचारपत्राणि अतः निःसरन्ति ?

७. 'कुतुबमीनारः' कुत्र कथं च प्रसिद्धोऽस्ति ?

८. 'गन्धकवापी' किमर्थम् प्रसिद्धास्ति ?

९. अस्य नगरस्य पण्यवीथीनां वर्णनं कुरुत ।



# भारतीय-संविधानम्

त्वमस्मदीया जननी जनित्वात्
पिताऽसि रक्षाकरणात् सदैव ।
शिक्षाप्रदानाच्च गुरुस्त्वमेव
सर्वोऽसि मे भारतवर्ष-देश ! ॥

अत्र सम्प्रति सम्पूर्णप्रभुत्वसम्पन्नं लोकतन्त्रात्मकं भारतीयजनराज्यं वर्तते । न कोऽपि वंशपरम्परागत आगतो राजाऽधुना इह भारते प्रधानशासको भविता । भारतीयसंविधानस्य एवं घोषणा विद्यते यत् भारतदेशोऽयम् अद्यारभ्य राज्यपालद्वारा शासितप्रान्तानाम्, भारतीयराज्यानाम्, प्रधानकमिश्नर-सम्बन्धि-प्रान्तीय-देशानाम् च स्थाने राज्यसंघात्मको भविष्यति । एतस्य



सर्वेऽपि नागरिकाः सामाजिक-राजनीतिकार्थिकक्षेत्रेषु समानरूपेणैव न्याय-विचाराभिव्यक्ति-धर्म-विश्वासोपासनानां





















संसद् की वर्ष में कम से कम दो बैठकें होंगी। यह संघ व समावर्ती सूची के कोई भी कानून बना सकती है। यह राष्ट्रीय हित में या संकट काल के घोषणा होने पर या राज्य की सहमति से किसी भी विषय पर कानून बना सकती है।

स्वातन्त्र्यं लप्स्यन्ते। इह प्रतिजनगौरवस्य राष्ट्रियैक्यस्य

च सुरक्षकं परस्परबन्धुत्वं वर्द्धयितुं सर्वेऽपि नियमाः निर्मिताः सन्ति ।

## भारतीयसंविधानस्य प्रस्तावना

'वयम्, भारतस्य जनाः भारतं सम्पूर्णप्रभुत्वसम्पन्नं लोकतन्त्रात्मकं गणराज्यं विधातुम्; तस्याखिलनागरिकांश्च सामाजिकमार्थिकं राजनीतिकं च न्यायम्, विचारस्याभिव्यक्तेः श्रद्धायाः धर्मस्य पूजानुष्ठानस्य च स्वतन्त्रताम्, प्रतिष्ठायाः अवसरस्य च समतां प्रापयितुम्; तेषु च सर्वेषु व्यक्तिगौरवस्य राष्ट्रैक्यस्य च समाश्वासयित्रीं भ्रातृभावनां वर्धयितुम्; कृतदृढसंकल्पा अस्यामस्मदीयायां संविधानसभायामद्य ख्रिस्तीये १९४९ तमे वत्सरे नवम्बरमासस्य २६ तमे दिवसे ( २००६ तमे विक्रमसंवत्सरे मार्गशीर्षे शुक्लपक्षे सप्तम्यां तिथौ ) एतेनेदं संविधानं स्वीकुर्महेऽधिनियमयामहेऽस्मभ्यं च समर्पयामहे ।'

उपर्युक्तसंविधानप्रारूपानुसारेण सर्वोपरि भारतीयसङ्घो विद्यते । तस्य प्रमुखो राष्ट्रपतिः कथ्यते । स च केन्द्रीय-व्यवस्थापक-मण्डलेन विभिन्नराज्यपरिषदां व्यवस्थापक-सभा-सदस्यानां निर्वाचकमण्डलेन च निर्वाचितो भवति। एतस्य सहायकः एकः उपराष्ट्रपतिर्भवति । उभयो-

रपि कार्यकालः पञ्चवर्षावधिर्भवति। कार्यकालस्य समाप्तौ तावपि पुनरग्रिमनिर्वाचने समुपस्थातुमर्हतः। राज्यपरिषदः अध्यक्षः एव उपराष्ट्रपतिः भवितुमर्हति। भारतीयराष्ट्रपतेः तदेव पदं विद्यते यदधुना इंगलैण्डदेशे राज्ञो विद्यते। तस्य सहायकरूपेण एकं मन्त्रिमण्डलम् अस्ति। मन्त्रिणां परामर्शानुरूपं कार्यं कर्तुं स आबद्धोऽस्ति। राष्ट्रपते-र्मन्त्रिमण्डलस्य च स एव सम्बन्धो विद्यते यदधुना इंगलैण्डराजस्य स्वमन्त्रिभिर्विद्यते।

भारतीय-सङ्घे एको राष्ट्रपतिः, एका राज्यपरिषद्, एका लोकपरिषद् इति त्रितयमस्ति। राज्यपरिषदि सदस्यानां संख्या सार्द्धशतद्वयी ( २५० ) विद्यते। तत्र द्वादश सदस्याः राष्ट्रपतिना मनोनीता भवन्ति। अवशिष्टाश्च निर्वाचिता राज्यप्रतिनिधयो भवन्ति। लोक-सभायाः सदस्यानां तु पञ्चशती विद्यते।

ते सर्वेऽपि प्रौढ-मताधिकारेण जनतया निर्वाचिताः भवन्ति। अधुना वयस्क-मताधिकार-प्रथा विद्यते। तत्र जनतया लोकलबोर्डसदस्याः, प्रतिनिधिसभा-सदस्याश्च निर्वाचिता भवन्ति। लोकलबोर्डसदस्यैः प्रान्तीय-कौंसिलसदस्याः निर्वाचिता भवन्ति। प्रान्तीयासेम्बलि-सदस्यैः पार्लियामेण्टसदस्यैश्च राष्ट्रपतिर्निर्वाचितो भवति।

पार्लियामेण्ट-सदस्या एव उपराष्ट्रपतेर्निर्वाचनं कुर्वन्ति। स एव राज्यपरिषदोऽध्यक्षो भवति। राष्ट्रपतिरेव सर्वोच्चन्यायाधीशस्य, 'एटर्नी' जनरलस्य, 'आडिटर'-कन्ट्रोलरस्य, निर्वाचनाध्यक्षस्य, गवर्नरस्य, राज्यप्रमुखस्य च निर्वाचनं करोति। प्रान्ताः साम्प्रतं राज्यसंज्ञां लभन्ते। प्रतिवर्षद्वयानन्तरं यथासम्भवं तृतीयांशसदस्यानां निर्वाचनं भवति। सम्प्रति भारतवर्षस्य प्राचीनगौरवं पुनरप्युद्दीप्तं जातम्।

महाभारते भीष्मपर्वणि नवमेऽध्याये व्यास एतद्देशस्य किमप्यैतिह्यम् इत्थम् आह—

अत्र ते कीर्तयिष्यामि वर्षं भारत! भारतम्।
प्रियमिन्द्रस्य देवस्य मनोर्वैवस्वतस्य च॥
पृथोस्तु राजन्! वैन्यस्य तथेक्ष्वाकोर्महात्मनः।
ययातेरम्बरीषस्य मान्धातुर्नहुषस्य च॥
अन्येषां च महाराज! क्षत्रियाणां बलीयसाम्।
सर्वेषामेव राजेन्द्र! प्रियं भारत! भारतम्॥
इदं तु भारतं वर्षं यत्र वर्तामहे वयम्।
पूर्वं प्रवर्त्तितं पुण्यं तत्सर्वं श्रुतवानसि॥
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षवानपि।
विन्ध्यश्च पारियात्रश्च सप्तास्य कुलपर्वताः॥ इत्यादि।

**प्रश्नाः**

१. देशमिमम् मातृ-पितृ-गुरुकथने के हेतवः ?

२. भारतीयसंविधानस्य का घोषणाऽस्ति ?

३. भारतीयसंविधानस्य प्रस्तावनां श्रावयत ।

४. भारतीयसंघस्य किं वैशिष्ट्यमस्ति ?

५. राष्ट्रपतिनिर्वाचनस्य कः प्रकारोऽस्ति ?

६. संसत्सदस्याः केषां निर्वाचकाः सन्ति ?

७. मन्त्रिमण्डलस्य किं कार्यमस्ति ?

८. उभयसभायां कति कति सदस्याः भवन्ति ?

९. महाभारते भारतस्य किम् ऐतिह्यं वर्णितम् ?



# पृथिव्याः स्वर्गः

कश्मीरोऽयं देशः भुवि स्वर्गस्य खण्डः देश-विदेशेषु प्रसिद्धोऽस्ति। भारतवर्षस्य पश्चिमोत्तरस्यां दिशि सीमान्तभूतोऽयं प्रदेशः व्यवस्थितो वर्तते। यत्रत्यौ जलवायू स्वास्थ्यकरौ स्तः। तत्र गत्वा तयोः प्रभावेण रोगिणो-



ऽपि नीरोगाः भवन्ति। वनेषु उपवनेषु च सदैव शीतो मन्दः गन्धयुतश्च वायुः वाति। यः खलु स्पर्शमात्रेण मनुष्याणां मनांसि सुखयति। पानीयमपि मधुरं, सुस्वादु, शीतलञ्च अस्ति।

अस्मिन् प्रदेशे पर्वतानां बहुलता वर्तते। मध्ये मध्ये समाः विषमाश्च भूमयः सन्ति। समस्थलानि नात्युष्णानि नातिशीतानि च भवन्ति। किन्तु पर्वतीयाः प्रदेशाः अतिशीताः सन्ति। हेमन्तशिशिरयोः ऋत्वोः शीतबाहुल्यं भवति। तदा च जनाः दिवापि ग्रीवासु ज्वलदङ्गारां हसन्तीं वहन्ति। एषु चतुर्षु मासेषु तत्र हिमानी पतति। तदा च कोऽपि गृहान्न निस्सरति। ऊर्णाकम्बलाद्युष्णवस्त्रैः आच्छन्नाः अग्निसेवनेन तत्रत्याः कालं नयन्ति।

एतद्देशीयाः पुरुषाः स्त्रियश्चातिगौरवर्णा भवन्ति। अत्र प्रकृतेश्च सुषमा परमरमणीया वर्त्तते। वन्या बहुविधा वृक्षाः लताश्च अस्य देशस्य सर्वतः शोभां वर्धयन्ति। जङ्गलेषु क्रोशान्यावत् विविधवर्णानि पुष्पाणि विकसितानि दृश्यन्ते। तानि च सुगन्धमयानि घ्राणं तर्पयन्ति। तेषां गन्धेन वनं प्रपूर्यते। केसरमपि भारते कश्मीरे एव जायते। अत्र च बहुविधानि मिष्टानि, मधुराणि, स्वादूनि, पुष्टिकराणि च फलानि उत्पद्यन्ते। द्राक्षाः, मृद्वीकाः, दाडिमाः, अक्षोटाः, सेवाश्च अत्र प्रचुरतया भवन्ति, सुदूरं देशश्च प्रेष्यन्ते। विविधवर्णाः चित्रविचित्राः पक्षिणः पतङ्गाश्च भवन्ति मुखरयन्ति च द्रुमकुञ्जानि स्वकूजनैः।

अत्र अनेकाः नद्यः सन्ति। तासु वितस्ता नाम नदी

प्रभूतजलवती वर्तते। वाराहीनामकात् अगाधात् सरोवरात् इयं प्रभवति। तस्य सरोवरस्य उपकण्ठे स्थिते शिवालये शिवमूर्त्तिः विराजते, यत्र च सुदूरदेशेभ्यो दर्शनार्थिनः समायान्ति।

अन्यानि चापि बहूनि तीर्थस्थानानि अत्र सन्ति। तेषु अमरनाथनामा महादेवो परमप्रसिद्धोऽस्ति। इदं स्थानं हिमसंहतिमध्ये विद्यते। अस्य च मार्गः दुर्गमोऽस्ति। दर्शनार्थिनां सहायतायै राजपुरुषान् शासकाः प्रेषयन्ति। एकस्याश्च गुहायां हैमं शिवलिङ्गं विद्यते। श्रावणपूर्णिमायां तत्र मेला भवति। तत्र गच्छतां पान्थानां कर्णौ पक्षिणां कलकलरवेण सुखमनुभवतः।

अनन्तनागनामकात् नगरात् श्रीनगरं यावत् वितस्तायां नौमार्गो विद्यते। नावा एव जना गमनागमनं कुर्वन्ति। इमाश्च नावः वस्तुतो नौकागृहाणि एव सन्ति। तत्र च शयनस्थानानि, स्नानगृहाणि, गोष्ठीभवनानि अन्यानि च स्थानानि पृथक् पृथक् निर्मितानि भवन्ति। बहवो देशीया विदेशीयाश्च एषु नौभवनेषु वसन्तः बहून् कालान् यापयन्ति।

श्रीनगरस्य नातिदूरे 'डल'नामकः एको महाकासारो वर्त्तते। तत्र च कासारजलतले शाककृषिर्भवति। विशाल-

काष्ठफलकेषु हस्तमात्रोच्छ्रितां मृदम् आस्तीर्य शाकबीजानि तत्र जना निक्षिपन्ति । इत्थंभूतानि रज्जुबद्धानि क्षेत्राणि कासारजले प्लवन्ते । तेषु च शाकफलानि भवन्ति । रज्जुं छित्त्वा यदा कदा कश्मीरस्थाः क्षेत्रचौराः शाकक्षेत्र-स्थलं चोरयन्ति नान्यत्र ।

अयं खलु भूभागः भारते पुरा संस्कृतविदुषां बहूनां जन्मभूमिरासीत् । अभिनवगुप्त-कैय्यट-मम्मट-बाणभट्ट-क्षेमेन्द्र-कल्हणप्रभृतयो बहवः कवयः विद्वांसश्च अत्र आविरभवन् ।

प्रकृतेः परमरमणीया सन्ततिः संस्कृतविदुषां जन्मभूमिरियं पुण्या धरित्री बर्बरैः, हिंसाप्रियैः, राक्षस-स्वभावैः, पापकारिभिः कैश्चन सीमान्तप्रदेशसैनिकैः समाक्रान्ता आसीत् अस्ति च । भारतवर्षीयैः राष्ट्रसेवकैः वीरसैनिकैः यद्यपि बहवो भागाः पाकिस्तानशासकेभ्यः प्राप्तबलानां शत्रूणाम् अत्याचारात् मुक्तीकृताः, तथापि केचन भूमिभागाः अधुनापि आततायिनाम् उत्पीडनैः शास्यन्ते । संयुक्तराष्ट्रसंघस्य सुरक्षापरिषदः पुरतश्चैषा समस्या निर्णयाय प्रस्तुता वर्तते । आशास्यते यद् दुष्टानां प्रजापीडकानां क्रूराणां पीडापाशात् कूटपाशाच्च मुक्तेयं रम्यभूमिः पुनः स्वीयां पूर्वां शान्तिं लप्स्यते ।

## प्रश्नाः

१. कुत्रत्यः, कः देशः, कथं च स्वर्गस्य खण्डभूत उच्यते ?
२. हेमन्तशिशिरयोः तत्र जनाः कथं कालं नयन्ति ?
३. कानि फलानि उपकरणानि चात्र उत्पद्यन्ते विदेशे प्रेष्यन्ते च ?
४. कुतः प्रसृता का च नदी कश्मीरे प्रभूतजलवती वर्तते ?
५. किमत्र सर्वतः प्रसिद्धं तीर्थस्थानमस्ति ?
६. कस्यां नद्यां नौमार्गः विद्यते ?
७. नौभवनेषु कानि कानि स्थानानि भवन्ति ?
८. कुत्र शाककृषिर्भवति ?
९. शाकक्षेत्र-विषये किं किं पठितं युष्माभिः ?
१०. के विद्वांसः पुरात्र आविरभूवन् ?
११. कैरेषा भूमिः सम्प्रति आक्रान्तास्ति ?
१२. लेखकेन किम् आशास्यते ?



# सूर्य-चन्द्र-ग्रहणम्

पशुपतिः—भ्रातृवर्य ! कथमद्य मार्गे महान् सम्मर्दो दृश्यते ?

लक्ष्मीनाथः—अयि वत्स ! किं त्वं न जानासि यदद्य सूर्य-ग्रहणं विद्यते । भारतीयानां प्रधानपर्वेदमस्तीति ?

प्रथमः—अस्तु, पर्वण्यस्मिन् जनसम्मर्दः किंनिमित्तं भवति ?

द्वितीयः—अहो त्वं जनमेलाया हेतुं न बुध्यसे ? अस्मिन् पर्वणि प्रायः सर्वेऽपि भारतीयाः स्नानं कुर्वन्ति । ये यत्रैव तिष्ठन्ति तत्रैव ते ग्रहणवेलायां यस्यां कस्यामपि नद्यां, कस्मिन्नपि तडागे, वाप्यां, कूपे वा स्नान-माचरन्ति ।

प्रथमः—भो भ्रातृवर्य ! भवान् कथयति, ये यत्र तिष्ठन्ति ते तत्रैव कुत्रापि जलाशये स्नानकृत्यं कुर्वन्ति । तत्कथमिमे ग्रामीणाः निजगृहं त्यक्त्वा इह काश्यां समागताः ?

द्वितीयः—अहो भ्रातः ! पुराणेषु लिखितमस्ति यद् ग्रहणे काश्यां स्नानेन बहुपुण्यं प्राप्यते । अतः इमे ग्राम्याः अपि जनाः गङ्गां स्नातुम् इहैवायान्ति ।

प्रथमः—अयि आर्य ! किमिदं ग्रहणं नाम ? कथमिदं भवतीति मां बोधय ।

द्वितीयः—त्वमद्यापीदं न जानासि ? चन्द्रग्रहः सूर्यविम्बं यदा आच्छादयति तदा सूर्यग्रहणं जायते । पृथ्वीच्छाया यदा चन्द्रविम्बम् आच्छादयति तदा चन्द्रग्रहणं जायते ।

प्रथमः—आर्यवर्य ! एतस्य ज्ञानं ग्रहणकालात् पूर्वमेव कथं जायते ?

द्वितीयः—किं भोः ! त्वं गणितं न जानासि ? गणितबलेन दैवज्ञ-बुधाः सर्वमिदं खगोलवृत्तान्तं जानन्ति ।

प्रथमः—अये मान्यवर्य ! यद्यपि ते गणितज्ञाः पण्डिताः गणितशास्त्रेणेदं गगनस्थं सर्वं वृत्तमवगच्छन्ति तथापि सर्वे साधारणजनाः कथं पूर्वमेव जानन्ति यदस्मिन् दिने ग्रहणं भविष्यतीति ?

द्वितीयः—इति ज्ञाने कः प्रयासः ? यो हि कार्तान्तिको महापण्डितो भवति, स ज्योतिश्शास्त्रानुसारं स्वयं गणितं करोति ; तत एव संकलय्य लोकोपयोगिकृत्यैः सह तिथिवारनक्षत्रयोगकरणानि पञ्चाङ्गानि एकस्मिन् पुस्तके लिखति । तच्च 'पञ्चाङ्गं' 'तिथिपत्रं' वा कथ्यते । तत एवेदं सर्वं ज्ञायते ।

प्रथमः—अहो ! तस्मात् पुस्तकात् इमे निरक्षराः ग्रामीणाः नराः नार्यो वा कथं जानन्ति ? इति तु मां बोधय ।

द्वितीयः—अयि भोः ! तत्र किं ज्ञातव्यमवशिष्यते । तत्पश्चाङ्गं मुद्रणयन्त्रे मुद्रितं भवति । तस्मिन्नेव स दैवज्ञः सूर्यग्रहणम्, चन्द्रग्रहणम् वा लिखति—यदस्मिन् वर्षे, अमुकमासे, अमुकपक्षे, अमुकतिथौ, अमुकदिने अमुकहोरातः अमुकक्षणावधि सूर्यग्रहणं चन्द्रग्रहणं वा भविष्यति ।

प्रथमः—अहो, एतेन तु एतावन्मात्रं सूच्यते यद् विज्ञाः ततः सर्वं जानीयुः अज्ञानां तु कथं ततो ज्ञानं जायते?

द्वितीयः—अयि भोः ! त्वमपि अनभिज्ञवद् वदसि । तदेव पश्चाङ्गं दृष्ट्वा ग्रामपुरोहिताः सर्वान् ग्राम्यजनान् बोधयन्ति, यदस्मिन् वर्षे अमुकदिनाङ्के विधौ रवौ वा ग्रहे राहुग्रासो भविष्यतीति । तन्मुखेन विज्ञाय सर्वेऽपि ग्रामीणाः जनाः काशीं कुरुक्षेत्रं वा स्नानार्थं यान्ति ।

प्रथमः—आर्यवर्य ! पूर्वं तु भवान् कथितवान्, यत् पृथ्वीच्छाया चन्द्रबिम्बम् आच्छादयति । चन्द्रश्च सूर्यबिम्बमाच्छादयति । इहागत्य इदं किं वदति, यत् अमुकदिने विधौ रवौ वा राहुग्रासो भविष्यति इति ?

द्वितीयः—नात्र सन्देहः कार्यः । भास्कराचार्यः एको महापण्डितः आसीत् । स शङ्कामिमां दूरीकृतवान् अस्ति । स व्याहृतवान् अस्ति यत्—

'पृथ्वीच्छायास्थितो राहुरन्धकारमयो ग्रहः ।
चन्द्रं ग्रसति चन्द्रस्थः सूर्यमित्यागमं मतम् ॥'




सूर्यग्रहणम्




चन्द्रग्रहणम्

प्रथमः—साधु ! साधु ! अत एव पुराणपाठकाः सर्वेऽपि व्यासाः 'राहुः सूर्यं चन्द्रं वा ग्रसति' इति वदन्ति । वयमपि बाला इदमेव जानीमः । अस्तु, अद्याहं भवतः कृपया इदं ज्ञातवान् यद् यदा पृथ्वीच्छाया चन्द्रबिम्बे पतति, तदैव अन्धकारमयो राहुग्रहः तत्रैव छायायां प्रविश्य चन्द्रं ग्रसति । यदा च चन्द्रच्छाया सूर्यबिम्बम् आच्छादयति तदा तत्र छायायां प्रविश्य सूर्यदेवं ग्रसति, इति ।

द्वितीयः—भवतु, सम्प्रति भवान् विज्ञो जातः। शृणु, भास्करीयं पद्यमपि त्वां श्रावयामि—

राहुः कुभामण्डलगः शशाङ्कं
शशाङ्कगश्छादयतीव बिम्बम्।
तमोमयः शम्भुवरप्रसादात्
सर्वागमानामविरुद्धमेतत् ॥

## प्रश्नाः

१. पर्वणि कथं जनसम्मर्दः भवति ?
२. जनाः कथं काश्यां समायान्ति ?
३. सूर्यग्रहणस्य चन्द्रग्रहणस्य च किं कारणं भवति ?
४. पञ्चाङ्गनामानि पृथक्-पृथक् श्रावयत ?
५. ग्रामपुरोहितः किं करोति ?
६. भास्कराचार्यः किं व्याहृतवान् ?
७. भास्करीयं पद्यं श्रावयत ?



## शीलं परं भूषणम्

अत्र केचिदर्थाः अलङ्काराः केचिदलङ्कार्याः केचिदुभयविधाः इति कविसम्प्रदाये लोके निरूढाः । तत्र सूनृता वाक्, चन्द्रोज्ज्वलो हारः, पौण्डरीकं दाम, दीप्तिमन्नेपथ्यं, शिशिरश्चन्दनचर्चः, स्नानं चेत्यादयः सुजनतेत्यादयश्चालङ्काराः—

ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमः
ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः ।
अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता
सर्वेषामपि सर्वभूषणमिदं शीलं परं भूषणम् ॥

पयःकमलादीनां त्वन्योन्यभूषणभूष्यभावः कविभिरुत्प्रेक्षितः । उक्तं च—

पयसा कमलं कमलेन पयः,
पयसा कमलेन विभाति सरः ।
शशिना च निशा निशया च शशी,
शशिना निशया च विभाति नभः ॥

शीलं तु भूषणान्तराणि सुदूरमधरीकरोति । इदं सततं भूषणं, क्षयीणि भूषणान्तराणि । परिशुद्धा व्युत्पत्तिः कदाचिदुद्भासते कदाचिन्मन्दायते । परिष्कृता बुद्धिरपि

कदाचित् क्रमते कदाचित् प्रतिहन्यते कृत्येषु। किञ्चेदं शीलं भूषणतां व्यभिचर्य न कदाचिद् भूष्यतां याति। न चात्रैव पर्यवस्यत्यस्य प्रकर्षः। भूषणान्तराणां सर्वेषां कारणमपीदं भवति। तदेवं महिमोपेतं किमिदं शीलं नाम। 'शुचौ तु चरिते शीलमि'त्यभिधानकृतः। 'शीलं स्वभावे सद्वृत्ते' इति च। 'अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा। अनुग्रहश्च दानं च शीलमेतत् प्रशस्यते ॥' इत्यपि च।

वयं तु मन्महे—शुचि चरितं सौजन्यादिलक्षणं प्रज्ञानं भवति शीलस्य न तु तत्स्वरूपम्। शीलं तु पुरुषस्य किमप्यनीदृशमन्तःस्थितं निधानं वाऽक्षयं शक्तिस्रोतो वा यदालम्बेन स समुद्र इव गाम्भीर्ये भवति। हिमवानिव च स्थैर्ये, यन्महिम्ना च तथाभिरूपो दीप्तश्च भवति यथा सर्वस्याभिगम्योऽनाधृष्यश्च जायते। इदं हि परिच्छेदातीतं पुराकृतपुण्योपादानं किमप्यन्तःसत्त्वमस्ति यन्न शक्यते पिण्डीभूतं साक्षान्निदर्शयितुम्। यदुपाश्रयः पुरुषः पथा याति नापथा, यं राममधिकृत्योपश्लोकयत्यादिः कविर्भगवान् वाल्मीकिः—

'न वनं गन्तुकामस्य, त्यजतश्च वसुन्धराम्।
सर्वलोकातिगस्येव, लक्ष्यते चित्तविक्रिया ॥'

सति शीले कविनालङ्कार्यत्वेनोपन्यस्ता ऐश्वर्यादयः स्वयमेवानुषङ्गादायान्ति, न तु तत्कृते यत्नः कार्यो भवति।

यमर्थमन्ये बुद्धिगुणेन शास्त्रवैशारद्येनाप्रतिहतेन वचसां प्रवाहेण यत्नाधिक्येन च घटयन्ति तं शीलवानासेचनकेन (तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्) रूपेण संवननेन ( वशक्रियया ) वा परेषां प्रसाधयति। शीलं हि सन्निधिमात्रेणोपकरोति तद्वन्तम्। पराभिभावी लोकोत्तरः कश्चिदस्य उत्कर्षः येनायं सर्वमपाकरिष्णुर्जिष्णुश्च भवति। चेतनाचेतनाश्चार्थाः अस्मिन्नानुलोम्येन वर्तन्ते। कविभणितिरपि—

वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणाद्<br>
मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरङ्गायते।<br>
व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते<br>
यस्याङ्गेऽखिललोकवल्लभतरं शीलं समुन्मीलति॥

यदा च पुरुषः सकामो भवति, कर्मसु तदा तद्धेतुस्तस्यान्तरेव मृग्यो न बहिः। शीलमेव स हेतुः।

सत्यनिष्ठता हि परा सीमा मानुष्यकस्य। सत्यनिष्ठतया च परेषु वृत्तिर्न्याय्यः। एतज्जन्या शक्तिर्नित्यान्वयिनी प्रतिरोधासहा च भवति, यथा तापः प्रकाशो वा भौतिकः। शक्याः खलूपलाः अन्तरिक्षे उत्क्षेप्तुम्। इदं च सत्यं यदुत्क्षिप्ताः सर्वेऽमी अवश्यमवपतिष्यन्ति। तथेदं खल्वपि सत्यं यत्र क्वापि स्तेये दण्डो न प्रणीतः, परातिसन्धानेऽनृतोद्ये वा दमो वा बन्धो वा नादिष्टोऽ-

भूत्तत्र कालान्तरे न्याय्यो दण्डो भवितेति। सत्यस्य नामैतादृशोऽधिकारः प्रभावश्च यदात्मानं विश्वासविषयं कारयति लोकेन। इदं तु एतदभिप्रायकं यच्छीलं सुनीतिकृता व्यवस्थितिर्भवति या व्यक्तिरूपे मुकुरे प्रतिफलिताऽभिव्यक्तं विलोक्यते।

शीलवन्तो महात्मानः जनतायाः कार्याकार्यप्रविवेके लब्धवर्णमविभ्रममन्तःकरणं भवन्ति। शीलं नाम कियती शक्तिरित्यत्र शीलवतः परिस्थितिप्रतिरोधोऽतदनुरोधो वा लिङ्गम्। अनवदातचर्याः स्वचर्यां तथा समर्थयन्ते यथा परे तां संमन्येरन् यथा वाऽसौ व्यतिकरेषु पुरुषान्तरेषु च प्रतिफलेत्। कृपणाः कृतस्य कर्मणः लब्धिं रिद्धिं वा चिन्तयन्ति। ते हि हृद्याः कमनीया वा न भवन्ति हार्दं परकीयं चाकाङ्क्षन्ति। शीलालङ्काराः सर्वत्र स्वदोषानुदाहियमाणानिच्छन्ति। पूर्वं पुनः स्वस्य सत्यभावितां योग्यतां च व्यतिकरैः प्रसिषाधयिषन्ति। यो हि शीलविभूषितः श्रेष्ठः नृणां भवति स पश्यत्युपसर्जनं व्यतिकरः स्वयमेव मामनुवर्तिष्यते, न मया सोऽनुवृत्य इति। यो हि मूर्तिमत्सौजन्यं भवति स विषमपतितोऽपि क्षेमेण निर्याति, यथा तथा जायमानेषु जनिष्यमाणेषु व्यतिकरेषु विघ्नव्यूहानपोह्य जयमन्वेति।

यदि कश्चित्स्वविषये परकीयाद्दर्शनात्संत्रस्यति वेपते च

दारिद्र्याद्दुद्विजते दुश्चरितात्प्रतिवेशिनो वा बिभेति स भीरुः सद्य एवासतोऽपि भीषणानर्थानुद्भावयिष्यति ।

आर्जवं हि शाश्वतो जयः । स चाक्षोभ्यो हृद्युपशमः इति तूष्णीमभिनन्द्यते । अयं चोपशमो नियतो नित्यमनुभूयमानो वा हर्षः ।

शीलवानेव कालोचितं जानाति व्यवहर्तुम् । स एव प्राप्तकालानि प्रतिषेधाक्षराणि नैतदेवं विपरीतमेतत्, इदमसदवद्यं, नाहमेवमाचरितुमुत्सहे । रुष्येस्त्वं मा वा रुषः, समस्थोऽहं स्यां विषमस्थो वा इत्येवमाकाराणि उद्गरीतुमीष्टे । इतरस्तु सत्यमेवैतत्, तथास्तु, बाढमनवद्यं ते दर्शनम्, एवमाचरिष्यामीत्येवमात्मकानि प्रकृतार्थानि वाक्यानि कृपणवत् ब्रूते स्वस्यानिष्टप्रकल्पकानि । शीलवांस्तु परेषामभिमतानि मतानि परम्परीणानि दर्शनानि चरणानि वा फल्गूनीति वाऽनर्थकानीति वा नाभ्युपगच्छति न चानुतिष्ठति । एतेन विचाराचारापारतन्त्र्येण स्थितेऽनानुगुण्येनादाक्षिण्येन चासौ लोकस्य चिन्त्यो भवति । लोको हि तं दैवतवदर्हयेत् विद्विष्याद्वात्यर्थमित्येको विकल्पो विकल्पान्तरं नास्ति ।

इदं चावश्यमभ्युपेयं न खलु कश्चिच्छीलसम्पत्तिं पूर्णरूपेण उपवर्णयितुं सहते न वा पारयते शीलाङ्गभूतान् समुदिताननुक्रमितुं गुणान् । यत्सत्यमेतदर्थकः प्रयत्नोऽपि

उपहास्यो भवति । इदं हि कृष्णाङ्गारेण विद्युतः आलेखनं नाम । इदम् अननुकार्यं चानुपमेयं च । 'गगनं गगनाकारं सागरः सागरोपमः' इतिवच्छीलं शीलेनैव सदृशम् । अयं हि विधातुः समुत्पादः रम्यतमः प्रशस्यतमश्च । तस्मादुपपद्यते अनर्थक एतेन संघर्ष इति, अनर्थिका वास्यानुकृतिरिति । परो हि लाभो मनुष्यस्य यच्छीलोपपन्नेन पुण्येन जनेन समागमः । उक्तं हि—

किं मधुना किं विधुना, किं सुधया किं वसुधयाऽखिलया ।
यदि हृदयहारिचरितः, पुरुषः पुनरेति नयनयोरयनम् ॥

प्रश्नाः

१. कतिविधाः अलंकाराः भवन्ति ?
२. किं सार्वदिकं भूषणम् ?
३. शीलस्य का परिभाषाऽस्ति ?
४. शीलसमुन्मीलिताङ्गस्य पुरः किं वस्तु कथं परिवर्तितं भवति ?
५. शीलालङ्काराः किमिच्छन्ति ?
६. कः कालोचितं व्यवहर्तुं जानाति ?
७. किं वर्णयितुं न पारयते ?
८. शीलेन सदृशं किम् अस्ति ?
९. कः परो लाभः ?



# दीपमालिका



न केवलं रक्षाबन्धन-विजयदशमी-होलिकादिकानेव आर्य-महोत्सवान् अपितु सर्वानपि भारतीयसांस्कृतिकसमारोहानतिशेते दीपावली-महोत्सवः सौन्दर्ये माधुर्ये च। यथा रक्षाबन्धनस्य सम्बन्धः ब्राह्मणैः, विजयायाः क्षत्रियैः, होलिकायाश्च शूद्रैः, तथा दीपावल्याः सम्बन्धः प्राधान्येन लक्ष्म्याः उपासकैः वैश्यैः सह वर्तते। इयं लक्ष्मी-पूजाऽस्माकं राष्ट्रियव्यवसायस्य भौतिकोद्योगस्य च महच्चिह्नम्। समारोहोऽयं यत्राध्यात्मिकतामाश्रयते तत्र भौतिकत्वमप्यवलम्बते। हरिप्रियायाः अनुग्रहं विना नाध्यात्मिकताक्षेत्रे न भौतिकत्वक्षेत्रे कोऽपि जीवधारी प्रगतिं कर्तुं प्रभवति। अद्यतने युगेऽर्थस्य महत्त्वं सर्वविदितमेव। अतोऽद्यत्वे लक्ष्मीपूजायाः महिमापि सर्वोत्कृष्टो वर्तते। अस्मिन्पर्वदिवसे लक्ष्मीपूजाद्वारा जना निजजीवनस्थितिमुच्चतरां कर्तुं प्रयतन्ते। वणिग्जना व्यापारे चरमामुन्नतिमधिगन्तुं लक्ष्म्याः अर्चनं कुर्वन्ति। आध्यात्मिकतायाः भौतिकत्वस्य च समन्वय एव भारतीयसंस्कृतेः सर्वाधिकं

वैशिष्ट्यं खलु। दीपपर्व अपि भारतीयसंस्कृतेर्वैशिष्ट्यमेव प्रकटयति। राष्ट्रिय-सांस्कृतिकैतिहासिकदृष्ट्या च अस्य पर्वणः स्वरूपं क्षेमकरमास्ते। इयमेवास्य पर्वणः महनीयता।

इदं पर्व रामस्यायोध्याऽऽगमनमप्युपलक्ष्य सम्पन्नं भवति। अयमुत्सवः कतिचिदन्यानप्युत्सवान् क्रोडीकृत्य स्वमायामं तनुते। कार्तिकमासस्य कृष्णपक्षस्य त्रयोदशीम् आरभ्य शुक्लपक्षस्य द्वितीयापर्यन्तं पञ्चसु दिवसेषु अभि-नीयतेऽयं महोत्सवः। दीपावल्याः कतिपयदिवसपूर्वमेव जना नगराणि ग्रामांश्च ससमारोहं संस्कुर्वन्ति। गृहाणि शुचीकुर्वन्ति, सुधया धवलीकुर्वन्ति, भूषयन्ति च। मनोहरैश्चित्रैरन्यैश्च प्रसाधनसाधनैः गृहकुड्यान्यलंकुर्वन्ति च। एवं सदनानि सर्वतो हारीणि मनोज्ञानि च संजायन्ते।

द्वादश्यां दीपावल्याः प्राक्तन्यां गोवत्सपूजा क्रियते, यात्र कृषिप्रधाने देशे सर्वथोपयुज्यते। भारतवासिनो गृहाणि न पताकाभिर्न तोरणैर्वा तथा भूष्यन्ते यथा पशुभिः। पशवो हि कृषकाणां दैनन्दिने उपयोगे सहायकाः सन्त एव तद्गृहाणि भूषयन्ति। अतस्तेषां पूजा भारतवासिभिरनादिकालात् क्रियते। अस्मिन् पशुपूजा-पर्वणि भारतीयाः स्वान् पशून् स्नपयित्वा तान् नूतनैर-लङ्करणप्रग्रहादिभिरलङ्कृत्य तान्नीराजनादिना समर्चयन्ति।

धन्वन्तरि-त्रयोदशी ( धनतेरस ) नाम्ना प्रसिद्धे दीपावल्यङ्गपर्वणि स्वे स्वे द्वारदेशे प्रदीपान् प्रज्वाल्य धर्मराजस्य धन्वन्तरेश्च समाराधनं विदधति आर्यजनाः। अस्यां तिथौ मनोहराणां नवीनानां पात्राणां क्रयं शुभं कृत्यं मन्यन्ते मानवाः। अद्य सन्ध्यासमये आपणेषु विक्रयार्थं प्रसारितैः विविधैः मनोहारिभिः पात्रैः, बहुवर्णेषु प्रकाशितेन विद्युत्प्रकाशेन, प्रदीपानाम् आलोकेन च विलक्षणैव शोभा जायते पण्यवीथीनाम्। दर्शकानाम्, वस्तुक्रेतॄणां पुरुषाणां स्त्रीणां च बाहुल्येन परिपूर्ण इव दृश्यते आपणः।

परवर्तिनि दिवसे नरकचतुर्दशीमहोत्सवो भवति। अद्यैव भगवान् कृष्णः नरकनामकं प्राणिपीडकं भयङ्करं दैत्यराजं निहत्य भूमेः भारं हृतवान्। अस्यामेव तिथौ हिरण्यकशिपुं प्रबलं राक्षसराजं हत्वा भागवतप्रधानं प्रह्लादं त्रातवान्, स्वकीयं भक्तवात्सल्यं सर्वव्यापकत्वं च प्रमाणितवान् भगवान् नृसिंहः। अद्यैव हनुमज्जन्ममहोत्सवोऽपि अभिनीयते जनैः। जनाः व्रतिनो भूत्वा हनूमन्तमर्चयन्ति हनुमन्मन्दिरेषु दर्शनमपि विदधति।

एभिः पूर्वाङ्गभूतपर्वभिः सह दीपावली समागच्छति या स्वप्रभाभिरुदासीनानामपि मनांसि चमत्करोति। अद्य प्रसन्नाननाः पुरुषाः महिलाः बालाः युवकाश्च सुवासांसि

धारयित्वा पण्यवीथिकासु लक्ष्मीपूजायाः उपकरणक्रयणार्थं विक्रयशालामभिगच्छन्ति। सर्वत्रापूर्वं उत्साहः प्रकटीभवति। रात्रौ महाधनानां हर्म्येषु मन्दविभवानां पर्णशालासु च सर्वत्रैव महालक्ष्मीदेव्याः समादरार्थं प्रदीपानाम् अवली प्रज्वालिता संस्थाप्यते। अमावास्यायास्तमिस्रे दीपानां पंक्तयोऽपूर्वां कामपि शोभां दधते। नगराणि च विद्युतोऽतिशयतेजसा देदीप्यन्ते। वाद्यानि वाद्यन्ते, तथा प्रतीयते यथा अमाया गाढान्धकारं विजेतुमिव लोकोऽयमुद्यतः स्यात्।

दीपमालिकाया अप्रतिमं सौन्दर्यं तु कस्यापि नगरोपान्तसरोवरस्य तटे सरसोऽम्भसि विद्युच्छटानां प्रतिबिम्बमवलोक्यैवानुभवितुं शक्यते। अस्यामनुपमदीपज्योत्स्नायामग्निकर्मकेलयोऽपि ( फायर-वर्क्स ) न न्यूनां सौन्दर्यानुभूतिं जनयन्ति।

अस्यामेव रात्रिवेलायां शक्तेः सरस्वत्याश्च पूजया सह ऐश्वर्याधिपत्न्याः महालक्ष्म्याः पूजनं महता समारोहेण सम्पाद्यते। वैदिकोपचारैः तान्त्रिकविधानैर्वा सविधिपूजनं लक्ष्म्याः नारायणस्य च विधीयते। पूजकाः आगामिवत्सराय च सुखं सम्पत्तिं च प्रार्थयन्ते। कृतगृहदेवतादीपदानविधयो नैष्ठिकाः उल्मुकं भ्रामयन्तो मन्त्राँश्चोच्चारयन्तो निजपितॄन् स्वर्गं गमयितुम् तन्मार्गमालोकयन्ति,

वालकाश्च विनैव किमप्युद्देश्यं ( मनोरञ्जनार्थमेव केवलम् ) शतमुल्काः भ्रामयन्तः मार्गान् चत्वराणि च प्रकाशयन्ति ।

दीपावल्याः परतः वलिप्रतिपदा संज्ञया प्रथितायां प्रतिपदि भवति समाराधनं गिरिराजस्य गोवर्द्धनस्य । इन्द्रकोपात् जायमानाभ्यः घोरवर्षाभ्यः गोधनं गोपान् व्रजमण्डलं च रक्षितुं भगवान् गोपालः अद्यैव गोवर्द्धनं स्ववामहस्तस्य कनिष्ठिकायाः अङ्गुल्याः नखे धृतवान् आसीत्। तस्यैव उपलक्ष्यं समाद्रियते इयं तिथिः भगवद्भक्तैः। गोमयेन गोवर्द्धनं पर्वतं निर्माय बहुभिः पत्रैः पुष्पैः धूपदीपादिभिश्च पूजयन्ति विविधानि फलानि मिष्टान्नानि च समर्पयन्ति स्त्रियः गिरिराजाय । अद्यः गावः वृषभाश्चापि पूजिताः मिष्टान्नं भोजिताश्च भवन्ति । 'अपकारपरायणः महेन्द्रोऽपि अवमन्यते, परोपकारपरः जडपर्वतोऽपि भवति समादरणीयः' इति परोपकारस्य साध्वी शिक्षा गृह्यते इतिहासादस्मात् । 'गवां रक्षकः नीचोऽपि पूज्यते, गोपीडकः महानपि अवमन्यते पराजीयते च' इति दिव्या शिक्षापि ग्रहीतुं शक्यते । अद्य गोवर्द्धनस्य परिक्रमां कर्तुं समीपस्थेभ्यः दूरस्थेभ्यश्च स्थानेभ्यः मथुरां समागच्छन्ति यात्रिणः, परिक्रमया आत्मानं पापनिर्मुक्तं च मन्यन्ते ।

दीपावल्याः उपक्रमे धनतेरसं नामकं पर्व, अवसाने च यमद्वितीया समागच्छति । श्रूयते 'ऽस्यां तिथौ यमो

भगिन्यास्स्वस्या यमुनायाः समीपमागच्छति । तस्यां च तिथौ यमुनायां स्नानं कुर्वन्तो जनाः यमयातनाभयान्मुच्यन्ते' इति । वस्तुतः इमामेव कथामाधारीकृत्य 'भोक्तव्यं भगिनीहस्तात्' इति स्मृतिं चानुरुध्य भ्रातृभगिन्योरानन्दवर्धनोऽयं दिवसः महता समारोहेण सम्पाद्यते, यत्र भगिन्यः भ्रातॄन् चन्दनकरणादिनाऽऽदृत्य तान् भोजयन्ति । विविधानि मिष्टान्नानि च तेभ्यः प्रयच्छन्ति । भ्रातरश्च यथाविभवं भगिनीभ्यः मनोहराणि बहुमूल्यानि भूषणानि उत्तमवस्त्राणि, रूप्यकादीनि च उपहारीकुर्वन्ति ।

कायस्थवंशोत्पन्नाः इमामेव द्वितीयां चित्रगुप्तद्वितीयानाम्ना व्यवहरन्ति, यत्र ते मसीखटिकालेखन्यादिजातीयजीविकाप्रतीकजातमर्चयन्ति ।

अतिविचित्रमिदं संयोगापतितं वस्तु यदत्रैव दीपावल्यां भारतीयजीवने समाजसंस्कारायावतीर्णा दयानन्दसरस्वतीमहाशयाः धराधाम हित्वा दिवं प्रयाताः ।

तदयं महोत्सवदिवसः भारतीयसंस्कृतेः कतिपयान्यङ्गानि अन्तस्समावेशयतीति भारतीयानां प्राणैः सहास्य शाश्वतः सम्बन्धः सञ्जातोऽस्ति ।

दीपावलीमहोत्सवः महतोः आमोदप्रमोदयोः वर्धकोऽस्ति । प्रतिदिनं नवं नवम् उत्तमं भोजनजातं निर्मीयते, भुज्यते भोज्यते च । उदाराः धार्मिकाश्च धनिनः पुरुषाः

दीनेभ्यः दरिद्रेभ्यः अनाथविधवाभ्यश्च स्वादु भोजनं नवीनानि वस्त्राणि च वितरन्ति। ऋतुश्च नातिशीतः न वात्युष्णो भवति। वर्षाणाम् अभावेन मार्गाः शुष्काः शोभनाश्च जायन्ते। निर्मले नभोमण्डले नक्षत्राणि प्रकाशमानानि नयनयोरत्यन्तम् आनन्दकराणि भवन्ति।

अस्मिन् आनन्दोत्सवे केचन पुरुषा अक्षादिक्रीडया लक्ष्मीमधिगन्तुं प्रयतन्ते। अस्य दुष्परिणामेन बहवः मनुष्याः निर्धनाः, प्रमत्ताः, चौर्यपराश्च भवन्ति। द्यूतक्रीडया धनं धर्मं चरित्रं च नाशयन्ति मानवाः। इयमक्षपरता दीपपर्वणः पवित्रतायां महान् कलङ्कः। ऋग्वेदस्याक्षसूक्तमपि द्यूतक्रीडामित्थं गर्हति—

अक्षास इदङ्कुशिनो नितोदिनो,
निकृत्वानस्तपन्तस्तपयिष्णवः।
कुमारदेष्णा जयतः पुनर्हणो,
मध्वा संपृक्ताः कितवस्य बर्हणा॥

अतश्च नियम्या खल्वियं कुप्रथा। एतस्य दुर्व्यसनस्य निवारणार्थं शासकैः, समाजसेवकैः, देशभक्तैश्च प्राणपणेन प्रयत्नो विधातव्यः। बाह्यगृहेषु प्रदीपप्रकाशवत् हृदयमन्दिरे ज्ञानालोकोऽपि अपेक्ष्यते वास्तविकसमृद्धिलाभाय। यथोच्यते—

दीपावली महापर्व मर्त्यानां मोदकारकम् ।
ज्ञानदीपप्रकाशेन श्रीशयोः समुपासनात् ॥

तथा चायमुत्सवदिवसो महत आनन्दस्य दिवसः भारतीयैर्यथायोग्यं समाहर्त्तव्यो येन संस्कृतेः सूत्रमक्षुण्ण-भावेनाग्रेसरत् पुरोभाविनीनां भारतीयजनतानां संस्कृतिं प्राचीनतमां कर्तुं शक्नुयात् ।

## प्रश्नाः

१. केषु पर्वसु दीपावली श्रेष्ठा अस्ति ?
२. दीपपर्व किं प्रकटयति ?
३. अस्य पर्वणः का महनीयता ?
४. इदं पर्व किमुपलक्ष्य सम्पन्नं भवति ?
५. द्वादशी-त्रयोदशी-चतुर्दशीतिथिषु किं किं क्रियते ?
६. दीपपर्वणः चाकचिक्यमवलोक्य किं प्रतीयते ?
७. अमावास्यायां रात्रौ किं किं सम्पाद्यते गृहस्थैः ?
८. प्रतिपद्द्वितीययोः किं किमाचर्यते ?
९. चित्रगुप्तद्वितीयायां कायस्थाः किं कुर्वन्ति ?
१०. कथं द्यूतक्रीडा निन्द्यते ?



# भरत-मिलनम्

( ततः प्रविशति भरतः रथेन सुमन्त्रः सूतश्च )

भरतः—भोस्तात !

सुमन्त्रः—कुमार ! अयमस्मि ।

भरतः—क्व तत्रभवान् ममार्यो रामः ? क्वासौ महाराजस्य प्रतिनिधिः ? क्वासौ प्रत्यादेशो राजलुब्धायाः कैकेय्याः ? क्वासौ सत्यमनुव्रतः ?

सुमन्त्रः—कुमार ! एतस्मिन्नाश्रमपदे ।

भरतः—तेन हि स्थाप्यतां रथः एकान्ते । विश्रामय अश्वान् ।

सुमन्त्रः—यदाज्ञापयति आयुष्मान् !

भरतः—भोस्तात ! निवेद्यतां यद् राज्यलुब्धायाः कैकेय्याः पुरो भरतः प्राप्तः इति ।

सुमन्त्रः—कुमार ! अलं गुरुजनापवादमभिधातुम् ।

भरतः—सुष्ठु तेन हि उच्यताम्—इक्ष्वाकुकुलकलङ्कभूतो भरतो दर्शनमभिलषतीति ।

सुमन्त्रः—कुमार ! नाहमेवं वक्तुं समर्थः । अथ पुनर्भरतः प्राप्तः इति ब्रूयाम् ।

भरतः—न न ! नाम केवलमभिधीयमानमकृतप्रायश्चित्त-मिव मे प्रतिभाति । किं ब्रह्मघ्नानामपि परेण

निवेदनं क्रियते । अहमेव निवेदयिष्ये । भो भो ! निवेद्यतां निवेद्यतां तत्रभवते पितृवचनकराय राघवाय ।

निर्घृणश्च कृतघ्नश्च प्राकृतः प्रियसाहसः ।
भक्तिमानागतः कश्चित् कथं तिष्ठतु यातु वा ॥ १ ॥

( ततः प्रविशति रामः सीतालक्ष्मणाभ्याम् )

रामः—( आकर्ण्य सहर्षम् ) सौमित्रे ! किं शृणोषि ! अयि विदेहराजपुत्रि ! त्वमपि शृणोषि ? स्वरो बन्धुशंका-मुत्पादयति ।

लक्ष्मणः—आर्य ! ममापि खल्वेषः स्वरसंयोगो बन्धुजन-बहुमानमावहति !

रामः—वत्स ! दृश्यताम् तावत् ।

लक्ष्मणः—यदाज्ञापयति आर्यः ( परिक्रामति ) ।

भरतः—अये कथं न कश्चित्प्रतिवचनं प्रयच्छति । किन्तु खलु विज्ञातोऽस्मि कैकेय्याः पुत्रो भरतः प्राप्तः इति !

लक्ष्मणः—( विलोक्य ) अये अयमार्यो रामः, न न, स्वरूपसादृश्यम् । ( सुमन्त्रं दृष्ट्वा ) अये तातः !

सुमन्त्रः—अये कुमारो लक्ष्मणः !

भरतः—एवम्, गुरुरयम् । आर्य ! अभिवादये ।

लक्ष्मणः—एह्येहि । आयुष्मान् भव । ( सुमन्त्रं वीक्ष्य ) तात ! कोऽत्रभवान् ?

सुमन्त्रः—

रघोश्चतुर्थोऽयमजात्तृतीयः
पितुः प्रकाशस्य तव द्वितीयः ।
यस्यानुजस्त्वं स्वकुलस्य केतो-
स्तस्यानुजोऽयं भरतः कुमारः ॥ २ ॥

लक्ष्मणः—एह्येहि इक्ष्वाकुकुमार !

भरतः—अनुगृहीतोऽस्मि ।

लक्ष्मणः—कुमार ! इह तिष्ठ । त्वदागमनम् आर्याय निवेदयामि ।

भरतः—आर्य ! शीघ्रं निवेद्यताम् ।

लक्ष्मणः—बाढम्, (उपेत्य) जयत्वार्यः । ते दयितो भ्राता भरतस्तिष्ठति ।

रामः—वत्स लक्ष्मण ! किमेवं, भरतः प्राप्तः ?

लक्ष्मणः—अथ किम् ।

सीता—आर्यपुत्र ! किं भरतः आगतः ?

रामः—अथ किम् ।

लक्ष्मणः—आर्य ! किं प्रविशतु कुमारः ?

रामः—वत्स लक्ष्मण ! इदमपि तावदात्माभिप्रायम् अनुवर्तयितुमिच्छसि । गच्छ, सत्कृत्य प्रवेश्यतां कुमारः । अथवा तिष्ठ त्वं, मैथिली स्वयं गच्छतु ।

सीता—आर्यपुत्र यदाज्ञापयति । (उत्थाय परिक्रम्य

भरतमवलोक्य ) हं, ततस्तां वेलामिदानीं निष्क्रान्तः आर्यपुत्रः, नहि नहि, रूपसादृश्यम् ।

भरतः—अये इयमत्रभवती जनकराजपुत्री ! आर्ये ! अभिवादये, भरतोऽहमस्मि ।

सीता—वत्स ! चिरं जीव ।

भरतः—अनुगृहीतोऽस्मि ।

सुमन्त्रः—एहि वत्स ! भ्रातृमनोरथं पूरय ।

भरतः—(राममुपगम्य) आर्य ! अभिवादये, भरतोऽहमस्मि ।

रामः—( सहर्षम् ) एह्येहि इक्ष्वाकुकुमार ! स्वस्ति आयुष्मान् भव । मां गाढमालिङ्ग ।

भरतः—अनुगृहीतोऽस्मि ।

सुमन्त्रः—जयत्वायुष्मान् ।

रामः—हा तात !

सुमन्त्रः—( सशोकम् )—

नरपतिनिधनं भवत्प्रवासं
भरतविषादमनाथतां कुलस्य ।
बहुविधमनुभूय दुष्प्रसह्यं
गुण इव बह्वपराद्धमायुषा मे ॥ ३ ॥

भरतः—प्रसीदतु प्रसीदतु आर्यः—

इह स्थास्यामि देहेन तत्र स्थास्यामि कर्मणा ।
नाम्नैव भवतः राज्यं कृतरक्षं भविष्यति ॥ ४ ॥

रामः—वत्स ! मा मैवम् । अहं पितुर्नियोगाद्वनमागतोऽस्मि । भवान् कथमत्र प्रवर्तते ?

सुमन्त्रः—अथेदानीमभिषेकोदकं क्व तिष्ठतु ?

रामः—यत्र मे मात्राभिहितं तत्रैव तावत्तिष्ठतु ।

भरतः—प्रसीदत्वार्यः । आर्य ! अलमिदानीं व्रणे प्रहर्तुम् ।

सीता—आर्यपुत्र ! अतिकरुणं मन्त्रयते भरतः !

भरतः—आर्य !

यावद्भविष्यति भवन्नियमावसानं
तावद्भवेयमिह ते नृप ! पादमूले ।

रामः—

मैवं नृपः स्वसुकृतैरनुयातु सिद्धिं
मे शापितो न परिरक्षसि चेत् स्वराज्यम् ॥ ५ ॥

भरतः—हन्त ! अनुत्तरमभिहितम् । समयतस्ते राज्यं परिपालयामि । मम हस्ते निक्षिप्तं तव राज्यं चतुर्दशवर्षान्ते प्रतिग्राहयितुमिच्छामि ।

रामः—एवमस्तु ।

भरतः—आर्य ! श्रुतम् ? आर्ये ! श्रुतम् ? तात ! श्रुतम् ? सर्वे वयमपि श्रोतारः । आर्य ! अन्यमपि वरं हर्तुमिच्छामि !—

पादोपभुक्ते तव पादुके मे
एते प्रयच्छ प्रणताय मूर्ध्ना ।

यावद्भवानेष्यति कार्यसिद्धिं
तावद्भविष्याम्यनयोर्विधेयः ॥ ६ ॥

सीता—आर्यपुत्र ! ननु दीयते खलु प्रथमं याचनं भरताय ?

रामः—तथास्तु । वत्स ! गृह्यताम् ।

भरतः—अनुगृहीतोऽस्मि ( गृहीत्वा ) आर्य ! अत्राभिषेकोदकमावर्जयितुमिच्छामि ।

रामः—तात ! यदिष्टं भरतस्य, तत् सर्वं क्रियताम् ।

सुमन्त्रः—यदाज्ञापयति आयुष्मान् ।

भरतः—( आत्मगतम् ) हन्त भोः ! (मनसि हर्षयुक्तो भवति)

रामः—वत्स ! राज्यं नाम मुहूर्त्तमपि नोपेक्षणीयम् ।

सीता—कथम् अद्यैव गमिष्यति कुमारो भरतः ?

रामः—अलमतिस्नेहेन । अद्यैव विजयाय प्रतिनिवर्त्ततां कुमारः ।

भरतः—आर्य ! अद्यैवाहं गमिष्यामि ।

सुमन्त्रः—आयुष्मन् ! मयेदानीं किं कर्तव्यम् ?

रामः—तात ! महाराजवत् परिपाल्यताम् कुमारः ।

सुमन्त्रः—यदि जीवामि, तावत् प्रयतिष्ये ।

रामः—वत्स ! आरुह्यतां ममाग्रतो रथम् ।

भरतः—यदाज्ञापयत्यार्यः ।

( रथमारोहति )

रामः—मैथिलि ! इतस्तावत् । वत्स लक्ष्मण ! इतस्तावत् । आश्रमपदद्वारमात्रमपि भरतस्यानुयात्रं भविष्यामः ।

( इति निष्क्रान्ताः सर्वे )

**प्रश्नाः**

१. भरतस्य स्वागमन-निवेदनं कीदृशमासीत् ?

२. सुमन्त्रेण भरतः कथं प्रस्तावितः ?

३. 'तिष्ठ त्वम्, मैथिली स्वयं गच्छतु' इति रामवचनस्य किं तात्पर्यम् ?

४. रामेण कथम् अनुत्तरम् अभिहितम् ?

५. भरतः द्वितीयवारं किम् इच्छति स्म ?

६. रामेण सुमन्त्रः किम् आदिष्टः ?



# शिवराजस्य शौर्यम्

दिल्लीनगरे महान् कलकलः, मार्गे मार्गे भेरीनादः । यवनानां कश्चन वार्षिकः पर्वसमयः । महाराष्ट्रराजो रोगग्रस्तः इत्याकलय्य च मुमुदिरे रिपवः । भिक्षुकाः प्रत्यहं यमुनातटे शष्कुलीः, अपूपान् , मोदकान् च प्राप्य आशीर्वादसहस्रैः समवर्धयन् ।

यातयामा रजनी । अस्मिन्नपि समये नगरे महानेव वादित्रध्वनिः । तावदकस्मादेकेन महाराष्ट्रभृत्येन त्वरितैः पदैः सोपानमारुह्य, कारागारं प्रविश्य अञ्जलिं बद्ध्वा कथितम्—महाराज ! प्रतिष्ठित इव कश्चन पञ्चाशद्वर्ष-



देशीयो यवनः शिबिकामारुह्य समायातोऽस्ति । भवनेऽस्मिन् प्रविशन्नस्माभिः पृष्टश्च समाट्-प्रेषितोऽस्मि चिकित्सितुं महाराष्ट्रराजम् वैद्योऽहमिति वदन् सगर्वं

प्रविशति। तदत्र प्रभुचरणा एव प्रमाणम् । तदाकर्ण्य यावदुत्तरं चिन्तयति महाराष्ट्रवसुधाधिपः शिवराजः, तावदप्राप्तोत्तर एव पादत्राणपटपटाभिः सोपानपङ्क्तीर्ध्वनयन् प्रविवेश यवनचिकित्सकः ।

ततः सर्वेऽपि तदभिमुखा ददृशुः—यदेकः पिचण्डिलः, दृढस्नायुः, नयनयुगारोपितोपनेत्रः, हरितकौशेयोष्णीषशिरस्कः, आनाभिविलम्बमानकूर्चः, कर्णान्तदीर्घश्मश्रुद्वयः, हरितकञ्चुकः, सुदीर्घपाण्डुराधोवसनः, करकलितपुष्टयष्टिकः, 'कुत्र महाराष्ट्रराजः ? को रोगः ?' इति पृच्छन् यवनचिकित्सकः प्रविष्टः। तत्पृष्ठलग्न एव चैको द्वाविंशतिवर्षकल्पः यवनयुवकोऽपि कक्षस्थापितश्याममञ्जूषः प्रविष्टः ।

अथोत्थाय माल्यश्रीकगौरसिंहाभ्यां स चिकित्सको महाराजशिवराजस्य पल्यङ्कसमीपे उपवेशितो राज्ञो मस्तकं स्पृशन् पृष्टवान्—'को रोगः ?' इति ।

महाराजः—चिकित्सक ! प्रत्यक्षतो न ज्ञायते को रोगः। किन्तु क्षुधा ह्रसते, अङ्गानि च निर्बलानि भवन्ति ।

चिकित्सकः—( चक्षुषी सम्मील्य द्वयोरपि करयोर्नाडीश्चतसृभिरङ्गुलिभिः परीक्ष्य ) नाड्यः शुद्धाः, मन्ये स्वतन्त्रतामपहाय परवान् संवृत्तः इति चिन्तारोगोऽयम् ।

महाराजः—( तस्य तेजस्विमुखमण्डलं निपुणं निरीक्षमाणः ) सत्यमन्येऽपि चिकित्सकाः एवमेव वदन्ति । किन्तु न जाने कीदृशोऽयं रोगो यज्ज्वलयत्यङ्गानि ।

चिकित्सकः—औषधं ददामि ।

महाराजः—अलं क्लेशेन । न वयं यवनस्पृष्टमगदमङ्गीकुर्मः, भवानेवं कष्टमूरीकृत्य श्रान्तवानिति गृह्यतामेष स्वल्प उपहारः । ( इत्यङ्गुलीयकमर्पयति )

मा[illegible]यश्रीकः—राजचिकित्सक ! तथ्यं ब्रूते महाराजः । नैतस्य कुले केनापि यवनौषधं गृहीतम् । एतस्य समीपमायाताः सर्वेऽपि गुणिनो यथोचितैरुपहारैः सत्क्रियन्ते । तद् गृह्यतामेतत् समयानुरूपमुपायनम् ।

चिकित्सकः—( अङ्गुलीयकं हस्तेन संस्पृश्य ) धन्या वदान्यता तत्रभवतः । न वयं दिल्लीश्वरलालिताः परदत्तं धनमीहामहे । न वा चिकित्साविषयेषु रोगिणां सम्मतिमपेक्षामहे । तत्रापि भवतश्चिकित्सनाय प्रबला दिल्लीश्वरस्याज्ञा, तत् क्षम्यताम् । ( इति वक्षः स्पृशति । महाराजः अन्तरेव कोपेन जाज्वल्यमानः स्वभावविकारं गोपयन् स्थितः । )

गौरसिंहः—किं निर्णीतं भवता ?

चिकित्सकः—यन्निर्णीतं तस्य प्रतिकारं विदधामि ।

आविद, आविद, मञ्जूषामुद्घाटय। औषधं पाय-
यित्वा क्षणेन नीरोगं विधास्यामि महाराजम्।

( तदनुचरः पेटाविधानमुदघाटयत्। चिकित्सकश्चै-
कस्मिन् काचपात्रे निर्मल-जलमिव कञ्चन द्रवमापूर्य श्वेतं
चूर्णम् एकं मेलयितुमारेभे। )

महाराजः—किमिदमौषधम्?

चिकित्सकः— आम्! पीयूष-हालाहलं नामौषधम्।

माल्यश्रीकः—पीयूष-हालाहलम्!

चिकित्सकः—आम्, पीयूषहालाहलम्। कफ-वात-पित्त-
प्रकोपजो रोगश्चेत् इदं पीयूषं क्षणेन नीरोगं विद-
धाति। पलायितुकामानां प्रवञ्चनामात्रं चेत् हाला-
हलम् क्षणेन विनाशयति।

ततो निश्चितं विषमिदमिति मन्यमानाः सर्वे परस्पर-
मवालोकयन्। तावदेषोऽङ्गुल्यग्रेण तोयमावर्त्य चूर्णं
मेलयित्वा समीपमानयत्। महाराजस्तु तस्य तादृशवचन-
श्रवणेन क्रमतो विवृद्धमन्युः साम्प्रतं यवनस्पृष्टपानीय-
पानमचिकीर्षुः प्रत्यक्षं गरलजलं पाययतीति ज्वालयेव
ज्वलितः मुखसमीपमानीयमानं सपात्रं चिकित्सकहस्तं तथा
समताडयत् यथा तत् काचपात्रं समुच्छलितं कुड्याहतं
शतधा समभूत्, चिकित्सकस्य कूर्चं गृहीत्वा च बलेन चकर्ष।
ततश्च गौरसिंहोऽपि पृष्ठतो बाहुबलं धृत्वा तं सुदूरं जघर्ष।

अथ महाराजस्तस्य स्वहस्तेनोत्पाटितं कृत्रिमकूर्चं तं च धृष्यमाणमपि सखिलखिलाशब्दं हसन्तं दृष्ट्वा किमिदमिति सावधानतया तमालोकयति स्म, ददर्श च यत् स्वबाल्यमित्रं प्रसिद्धो योद्धा श्रीमान् सुरेश्वरोऽस्तीति। ततो महाराजः उत्थाय तं गाढमालिलिङ्ग।

**प्रश्नाः**

१. रिपवः कथं मुमुदिरे ?

२. महाराष्ट्रभृत्येन किमुक्तः शिवराजः ?

३. यवनचिकित्सकस्य कीदृशं स्वरूपम् आसीत् ?

४. चिकित्सक-शिवराजयोः कः आलापः अभूत् ?

५. उपहारं संस्पृश्य चिकित्सकेन किमुक्तम् ?

६. दीयमानौषधविशेषस्य किं वैशिष्ट्यं चिकित्सकेन प्रतिपादितम् ?

७. चिकित्सकोक्तिमाकर्ण्य महाराजगौरसिंहाभ्यां किमकारि ?

८. चिकित्सकं बाल्यमित्रमवगत्य शिवराजेन किं कृतम् ?



# भगवान् बुद्धः

परिस्थित्यनुरूपं महात्मानोऽस्मिन् धरातले आविर्भवन्ति। ते च सामाजिकदूषणानि दूरीकृत्य सद्धर्मपथे जनान् प्रेरयन्ति। यदा किल यज्ञेषु पशुबलिदानस्य प्राचुर्यं



सञ्जातं तदा करुणामूर्तिर्भगवान् बुद्धोऽहिंसायाः प्रचाराय अस्मिन् जगति अवततार। प्राचीनभारतेतिहासे महात्मनो बुद्धस्य जीवनं महिमापूर्णं खलु। तस्य जीवनं युगेभ्यो भारतीयानादर्शपथे प्रैरयत् प्रेरयति चाधुनापि।

न केवलं भारतीयाः परं वैदेशिकाः अपि अस्य महात्मनः सद्धर्ममगृह्णन् ।

एवं श्रूयते किल सुमेधा नाम कश्चिद् ब्राह्मणो वेदपारगः दीपङ्करबुद्धकाले वर्तमान आसीत् । संसारे चिरं संसरन् दुःखान्तं गवेषमाणः स दानादिकमनुतिष्ठन् शीलनैष्कर्म्यप्रज्ञादीन् पूरयामास । सर्वाः पारमिताः साक्षात्कृत्य पूर्णत्वमासादितवान् । मरणोत्तरं स तुषिताख्ये देवावासे देवराड्रूपेण दिव्यदेहमास्थायाविरभूत् । तत्र दीर्घकालं स्वीयपुण्यसंचारसमुचितां महीयसीं सम्पदं भुञ्जानो देवैः सम्प्रार्थितः सन्नात्मनः सम्बोधिकालः समागत इत्युपलभ्य स्वेच्छया स्वावतरणयोग्यं काल-देशादिकं निर्णीय भारतवर्षे 'बस्ती' मण्डले उत्तरकोसलेषु कपिलवस्तुनगरे शाक्यवंशे राज्ञः शुद्धोदनस्य महिष्याः मायादेव्याः कुक्षावागत्य तस्यै श्वेतहस्तिरूपेण प्रकाश-मयषट्कोणताराारूपेण च स्वात्मानं प्रदर्शयन् अस्मात् कालात् सार्द्धद्विसहस्रवर्षपूर्वम् ( २५०० ) वैशाखमासस्य पूर्णिमातिथौ लुम्बिनीवने शालतरुमूले भूमिष्ठो बभूव ।

आबाल्यं लालितो भोगसुखेन विलासोपकरणैश्च परिवृतोऽपि स क्षत्रियोचितशस्त्रादिचर्चायां विविधविद्यासु चतुःषष्टिकलासु च परं नैपुण्यमलभत । षोडशवर्षदेशीय एव स दारपरिग्रहं विदधे तथा राहुलाभिधं पुत्रमवाप इति स्मर्यते ।

अथ कदाचित्प्रवृत्ते मधुमासवैभवे स उद्यानविहारार्थम् उपवनमगमत् । तदैव तस्य प्रबोधकालः समागत इति देवास्तस्य पूर्वस्मृतिमुत्पादयितुं बोधिलाभार्थं महाभिनिष्क्रमणे मतिं जनयितुञ्च गलिताङ्गं वृद्धमेकं तस्मै दर्शयामासुः । तं दृष्ट्वा दयमानः करुणावतारः सूतमपृच्छत् 'क एष भोः सूत नरोऽभ्युपेतः, केशैः सितैर्यष्टिविषक्तहस्तः। भ्रूसंवृताक्षः शिथिलाननाङ्गः किं विक्रियैषा प्रकृतिर्यदृच्छा ।' स उदतरत्—

पीतं ह्यनेनापि पयः शिशुत्वे,
कालेन भूयः परिसृप्तमूर्व्याम् ।
क्रमेण भूत्वा च युवा वपुष्मान्,
क्रमेण तेनैव जरामुपेतः ॥

एवमभिहितो राजकुमारः किञ्चिद्विचलितः सूतं पुनः पप्रच्छ 'किमेषा जरा ममापि भविता ?' सारथिरुवाच— आयुष्मतोऽपि एषा जरा कालवशेन निःसंशयं भविष्यति ।' उद्विग्नो भूत्वा राजकुमारः तत्क्षणे एव प्रतिनिवर्त्तते स्म । पथि पुनः रुग्णमेकं जनमवलोक्य सारथिं पृष्टवान्—

स्थूलोदरः श्वासचलच्छरीरः,
स्रस्तांसबाहुः कृशपाण्डुगात्रः ।
अम्बेति वाचं करुणं ब्रुवाणः,
परं समाश्रित्य नरः क एषः ॥

'रोगाभिधानेन अनेन सर्वोऽपि जनः ग्रस्यते' इति सारथिवचनं श्रुत्वा परमुद्विग्नो बभूव । एकदा मृतं नरं दृष्ट्वा कुमारः सारथिमपृच्छत्—'सूत ! चतुर्भिर्नरैरुह्यमानो दीनै-रुदद्भिर्मनुष्यैरनुगम्यमानः क एषः ?' सूतः प्रत्यवादीत्—

बुद्धीन्द्रियप्राणगुणैर्वियुक्तः,
सुप्तो विसंज्ञस्तृणकाष्ठभूतः ।
संवर्ध्य संरक्ष्य च यत्नवद्भिः,
प्रियप्रियैस्त्यज्यत एष कोऽपि ॥

सारथेरिदमपि प्रश्नान्तरं ज्ञात्वा यत् 'सर्वप्राणिनाम् ईदृश एवान्तो भवति' सोद्वेगः कुमारः चिन्तयामास—

जरां व्याधिं च मृत्युं च, को हि जानन् सचेतनः ।
स्वस्थस्तिष्ठेन्निषीदेद्वा, शयीत किं पुनर्हसेत् ॥
यस्तु दृष्ट्वा परं जीर्णं, व्याधितं मृतमेव च ।
स्वस्थो भवति नोद्विग्नो, यथाऽचेतास्तथैव सः ॥

एवं सिद्धार्थः परमार्हैरपि विषयैस्तथा विलोभ्यमानोऽपि तेषु न रेमे, नापि शान्तिं लेभे । अपि त्वेभ्योऽनर्थेभ्यो मुक्तेरुपायांश्चिन्तयन्नेव जीवनमयापयत् । अनन्तरं देवानु-भावेन पथि शान्तचेतसं तप्तकाञ्चनसन्निभं समुद्भासित-प्रसन्नवक्त्रमण्डलं प्रज्ञाकरुणयोर्लोकोत्तरविग्रहमिव कञ्चित्तापसं दृष्ट्वा ज्ञात्वा च तं निस्तीर्णभवसागरं लङ्घितजरादिविकारजातं तादृशमेव स्वात्मानमपि विधातुकामः प्रव्रज्यायै मनश्चक्रे।

वीतस्पृहं कुमारमनुकूलयितुं पित्रादयः निष्फलाः बभूवुः। निर्वेदे घनीभूते दृढीभूते च गृहत्यागसङ्कल्पे स निशीथे सुप्तेषु विश्वेषु महाभिनिष्क्रमणाय प्रतस्थे। सद्योजातस्तनयः, प्रियतमा, स्नेहानुबन्धी जनकः, प्रभूतमैश्वर्यं, नवं वयः, कान्तं वपुः किमपि तस्येप्सिताभिमुखं मनः प्रतीपयितुं तर्पयितुं च नाशकत्।

'अनामां' नाम नदीं तीर्त्वा कुमारः स्वाभूषणानि सारथये 'छन्दकाय' वितीर्य साश्वं तं विसृज्य च खरतरकरवालकृत्तकेशः धृतश्रमणवेशः सत्यधर्मान्वेषणाय कतिचन विदुष उपससाद। प्रथमं गिरिव्रजमासाद्य तत्रत्यपरिव्राजकेभ्यः आर्यमतग्रहणेनापि ईप्सितमनवाप्य कञ्चित्कालं स 'कालायस'गोत्रोद्भवाभ्याम् 'आलारकरुद्रकाख्याभ्याम्' दार्शनिकाभ्यां शिक्षामलभत। अत्र सत्यं ज्ञानमनुपलभमानोऽसौ पञ्चभिर्मित्रैः सह वर्षत्रयं भीषणं तपश्चकार। तत्रापि चित्तस्यैकान्तिकीं निवृत्तिमपश्यन् तदाश्रयं विहाय उरुविल्वायां गत्वा निरञ्जनातीरे बोधगयायां शुचौ प्रदेशे कस्यचिदश्वत्थवृक्षस्य मूले पूर्णबोधिलाभार्थं नानाप्रकारैरुपवासादिकृच्छ्रविधिभिरात्मनः कार्श्यं सम्पादयता षड्वर्षाणि यावद् दुष्कराणि तपांसि समारेभे। अनाहारकदर्थितस्य च तस्य तृप्तये सुजाता नाम काचिदबला पायसमुपायनी कृतवती।

कृतपायसाहारः आस्तीर्णकुशश्चासौ बोधिवृक्षस्याधः समाधौ न्यमज्जयत्। तत्र ध्यानतरस्य तस्य रात्रेः प्रथमे यामे प्राक्तनीनां जातीनां तदुद्भवसंस्काराणां चानुभवपर्यन्तमनुस्मरणमजायत। अथ द्वितीये यामे दिव्यं चक्षुरुदपद्यत। येन निखिललोकस्य दर्पणप्रतिबिम्बितनगरस्येव स्फुटं दर्शनमभूत्। तृतीये यामे च तस्य चेतसि प्रतीत्यसमुत्पादस्य निगूढं रहस्यमुन्मिषितमभूत्।

एवं स बोधिद्रुममूले जगतां दुःखस्कन्धस्य मूलभूतामविद्यां भित्त्वा सर्वाः प्रतिसंविदः सम्प्राप्य बोधिपाक्षिकान् धर्मानुपलभ्य च सर्वज्ञत्वं बुद्धत्वं चाधिगतवान्।

बहुविधा लोकोत्तराः सिद्धयस्तेन लब्धाः—षडभिज्ञाः, दश बलानि, तपस्यायाः फलभूतं सर्वमेव तस्य करायत्तमभूत्। बोधिसम्पत्तेरनन्तरं स्वात्मानं कृतार्थं मन्यमानः तत्त्वस्य गहनत्वं दुर्विगाहत्वं च विचार्य स वाराणसीमेव सद्धर्मप्रचारणाय समागच्छत्। काशीसमीपवर्ति-'सारनाथ'-नामकस्थानम् एव सम्यक्सम्बुद्धस्य धर्मचक्रप्रवर्त्तनस्थानमभूत्।

सर्वप्रथमं पञ्चभद्रीयविप्रानेत्र उपदिश्य कृतार्थान्कृत। तत्र तेन चत्वारि आर्यसत्यानि दिष्टानि। दुःखमस्तीति प्रथमम् आर्यसत्यम्, तस्य हेतुरस्तीति द्वितीयम्,

दुःखनिरोधो निर्वाणाख्यः संभवतीति तृतीयम्, तदुपायभूतोऽष्टाङ्गयोगोऽप्यस्तीति तुरीयम्।

योगाङ्गानि—सम्यग्दृष्टिः, सम्यक्संकल्पः, सम्यग्वाक्, सम्यगाचारः, सम्यगाजीवः, सम्यग्वीर्यम्, सम्यक्स्मृतिः, सम्यक्समाधिश्च।

तदाप्रभृति जनपदेषु सर्वत्र परिभ्रमन् स सद्धर्मं प्रचारयामास। केचिद् गृहे निवसन्तः उपासकाः बभूवुः। केचिच्च गृहं त्यक्त्वा भिक्षवः। विम्बसार-शुद्धोदन-राहुलादिपुरुषवद् आम्रपाली-यशोधरा-प्रभृतयः स्त्रियोऽपि तस्य शिष्यमण्डले प्राविशन्। क्रमेण विहारसङ्घारामादि स्थाने स्थाने निर्मितमभूत्। संघस्य परिचालनोपयोगिनो नियमा निबद्धाः जाताः। भगवतो बुद्धस्योपदेशाः त्रिपिटकनामके संग्रहग्रन्थे संगृहीताः सन्ति। ब्राह्मणाः राजानः श्रेष्ठिनः वैश्याः अपि त्रिरत्नं—बुद्धं, धर्मं, सङ्घं च—शरणमुपागच्छन्। भारताद् बहिः चीन-जापान-ब्रह्मा-तिब्बत-लङ्कादिदेशीया अपि शरणमुपागच्छन्।

बौद्धधर्मः आचारप्रधानोऽस्ति। 'अहिंसा परमो धर्मः' अस्य आदर्शमन्त्रः। बुद्धोपदिष्टाः नैतिकसिद्धान्ताः सरलाः सुकराश्च सन्ति। वैदिकयज्ञानां पशुवदानस्य स्थाने भगवान् बुद्ध आत्मयज्ञं प्रचारयामास। तत्र स्रुवो वाणी, हृदयं च यज्ञवेदी। बौद्धधर्मः ईश्वरं प्रति उदासीनः।

सत्कर्म, अहिंसा, दयैव मनुष्यमात्रस्य वास्तविको धर्मः। मानवः स्वयमेव निजदैवस्य निर्मातास्ति। स सत्कर्मसु प्रवर्त्तमानोऽन्ततो निर्वाणमधिगच्छतीति बौद्धो दृष्टिकोणः। अस्य धर्मस्य लोकप्रियतायाः कारणं बुद्धोपदेशानां सारल्यमस्ति। बौद्धधर्मे जातिभेदो, वर्गभेदो, लिङ्गभेदश्च न सन्ति। वर्णाश्रमव्यवस्थामपि बौद्धाः न मन्यन्ते। 'पालि'नामजनभाषायाम् उपदेशप्रदानं च अस्य व्यापक-प्रचारे निदानम्।

तदुपदेशमाहात्म्ये बहवः अर्हद्भावं गताः, बहवश्च स्रोतआपत्ति–सकृदागामि–अनागामि–भूमिषु प्रविष्टाः। केचित्तु मौद्गलायनवत् ऋद्धिमन्तोऽपि संवृत्ताः। बहवस्तस्य विरोधिनोऽपि विरोधं परिहाय तस्य सेवकत्वं गृहीतवन्तः।

इत्थं चत्वारिंशदधिकवर्षकालं धर्ममुपदिशन् जीवानुद्धरन् कृतकृत्यो भगवान् पश्चिमे वयसि कुशीनगरमागत्य तत्र शालवने आनन्दनामकेन शिष्येण सेव्यमानः परनिर्वाणमाससाद। तदस्थीनि गृहीत्वा देशस्याष्टसु स्थानेषु रक्षितानि, तत्र स्तूपाः निरमीयन्त।

एवं भगवता बुद्धेनालौकिकं ज्ञानमयं ज्योतिः सर्वत्र प्रचारितं यद्द्यापि भारतस्य गौरवं देशे विदेशे च सर्वत्र प्रख्यापयति।

## प्रश्नाः

१. भगवान् बुद्धः कस्यां परिस्थितौ अत्र अवतरति स्म ?
२. भगवतो बुद्धस्य पूर्वजन्मवृत्तं, जन्मग्रहणस्वरूपं च वर्णयत ।
३. कियति वयसि कस्याः पाणी गृहीत्वा कं पुत्रम् अलभत ?
४. भ्रमणप्रसङ्गे दृष्टानि चतुर्दृश्यानि, सूतेन सह तस्य वार्तालापं च वर्णयत ।
५. कं दृष्ट्वा स प्रव्रज्यायै मनश्चक्रे ?
६. गृहत्यागादारभ्य बोधप्राप्तिपर्यन्तं बुद्धचर्यां वर्णयत ?
७. सुजाता कदा किं च बुद्धाय उपजहार ?
८. किं किं बुद्धस्य करायत्तमभूत् ?
९. सर्वप्रथमं कुत्र, कस्मै च सद्धर्ममुपदिदेश ?
१०. कानि आर्यसत्यानि, के च अष्टाङ्गयोगाः ?
११. किं च त्रिरत्नम् ?
१२. बौद्धधर्मस्य विदेशे कुत्र कुत्र प्रचारः अभूत् ?
१३. बौद्धधर्मस्य वैशिष्ट्यं वर्णयत ।
१४. कियदवधि धर्ममुपदिश्य कदा कुत्र निर्वाणमवाप ?



# बालकः सर्वदमनः

( नेपथ्ये )

मा खलु चापलं कुरु। कथं गत एवात्मनः प्रकृतिम्।

राजा—( कर्णं दत्त्वा ) अभूमिरियम् अविनयस्य। को नु खल्वेष निषिध्यते ? ( शब्दानुसारेणावलोक्य सविस्मयम् ) अये को नु खल्वयम् अनुबध्यमानस्तपस्विनीभ्यामबालसत्त्वो बालः !

अर्धपीतस्तनं मातुः आमर्दक्लिष्टकेसरम्।
प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति॥ १॥

( ततः प्रविशति यथानिर्दिष्टकर्मा तपस्विनीभ्यां बालः )

बालः—जृम्भस्व रे सिंह ! दन्ताँस्ते गणयिष्ये।

प्रथमा—अविनीत ! किं नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि। हन्त ! वर्धते ते संरम्भः। स्थाने खलु ऋषिजनेन 'सर्वदमन' इति कृतनामधेयोऽसि।

राजा—किं नु खलु बालेऽस्मिन्नौरस इव पुत्रे स्निह्यति मे मनः। नूनमनपत्यता मां वत्सलयति।

द्वितीया—एषा खलु केसरिणी त्वां लङ्घयति यदि अस्याः पुत्रं न मुञ्चसि।



बाल:—( सस्मितम् ) अहो, बलीयः खलु भीतोऽस्मि ( इत्यधरं दर्शयति )।

राजा—महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे।
स्फुलिङ्गावस्थया वह्निरेधोपेक्ष इव स्थितः ॥ २ ॥

प्रथमा—वत्स ! एनं बालमृगेन्द्रं मुञ्च। अपरं ते क्रीडनकं दास्यामि।

बालः—कुत्र ! देह्येतत्। ( इति हस्तं प्रसारयति )

राजा—कथं चक्रवर्त्तिलक्षणमप्यनेन धार्यते।

द्वितीया—सुव्रते, न शक्य एष वाङ्मात्रेण विरमयितुम्। गच्छ त्वम्। मदीय उटजे मार्कण्डेयस्य ऋषिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति। तमस्योपहर।

प्रथमा—तथा। ( निष्क्रान्ता )

बालः—अनेनैव तावत् क्रीडिष्यामि। ( इति तापसीं विलोक्य हसति )

राजा—स्पृहयामि खलु दुर्ललिताय अस्मै।

तापसी—भवतु ! न मामयं गणयति ( पार्श्वमवलोकयति ) कोऽत्र ऋषिकुमाराणाम् ! (राजानमवलोक्य) भद्रमुख, एहि तावत् मोचयानेन दुर्मोकहस्तग्रहेण डिम्भलीलया बाध्यमानं बालमृगेन्द्रम्।

राजा—( उपगम्य सस्मितम् ) अयि भो महर्षिपुत्र !
एवमाश्रमविरुद्धवृत्तिना
संयमः किमिति जन्मतस्त्वया।

सत्त्वसंश्रयसुखोऽपि दूष्यते
कृष्णसर्पशिशुनेव चन्दनः ॥ ३ ॥

तापसी—भद्रमुख, न खल्वयमृषिकुमारः ।

राजा—आकारसदृशं चेष्टितमेवास्य कथयति । स्थानप्रत्ययात्तु वयमेवं तर्किणः । ( यथाभ्यर्थितमनुतिष्ठन् बालस्पर्शमुपलभ्य आत्मगतम् )

अनेन कस्यापि कुलाङ्कुरेण
स्पृष्टस्य गात्रेषु सुखं ममैवम् ।
कां निर्वृतिं चेतसि तस्य कुर्यात्
यस्यायमङ्कात् कृतिनः प्ररूढः ॥ ४ ॥

तापसी—( उभौ निर्वर्ण्य ) आश्चर्यमाश्चर्यम् !

राजा—आर्ये, किमिव ?

तापसी—अस्य बालकस्य रूपसंवादिनी ते आकृतिः इति विस्मापितास्मि । अपरिचितस्यापि तेऽप्रतिलोमः संवृत्तः इति ।

राजा—( बालमुपलालयन् ) न चेन्मुनिकुमारोऽयमथ कोऽस्य व्यपदेशः ?

तापसी—पुरुवंशः ।

राजा—( आत्मगतम् ) कथम् एकान्वयो मम । अतः खलु मदनुकारिणमेनमत्रभवती मन्यते । अस्त्येतत्पौरवाणामन्त्यं कुलव्रतम्—

भवनेषु रसाधिकेषु पूर्वं
क्षितिरक्षार्थमुशन्ति ये निवासम् ।
नियतैकयतिव्रतानि पश्चात्
तरुमूलानि गृहीभवन्ति तेषाम् ॥ ५ ॥

( प्रकाशम् ) न पुनरात्मगत्या मानुषाणामेष विषयः ।

तापसी—यथा भद्रमुखो भणति । अप्सरःसम्बन्धेन अस्य बालस्य जनन्यत्र देवगुरोस्तपोवने प्रसूता ।

राजा—( अपवार्य ) हन्त, द्वितीयमिदमाशाजननम् । ( प्रकाशम् ) सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी !

तापसी—कस्तस्य धर्मदारपरित्यागिनः नाम सङ्कीर्तयितुं चिन्तयिष्यति ।

राजा—( स्वगतम् ) इयं खलु कथा मामेव लक्ष्यीकरोति । यदि तावदस्य शिशोर्मातरं नामतः पृच्छामि । अथवा अनार्यः परदारव्यवहारः ।

( प्रविश्य मृन्मयूरहस्ता )

तापसी—सर्वदमन ! शकुन्तलावण्यं पश्य ।

बालः—( सदृष्टिक्षेपम् ) कुत्र मे माता ?

उभे—नामसादृश्येन वञ्चितो मातृवत्सलः !

द्वितीया—वत्स, अस्य मृत्तिकामयूरस्य रम्यत्वं पश्य इति भणितोऽसि ।

राजा—( आत्मगतम् ) किं वा शकुन्तलेत्यस्य मातुराख्या। सन्ति पुनर्नामधेयसादृश्यानि। अपि नाम मृगतृष्णिकेव नाममात्रप्रस्तावो मे विषादाय कल्पते।

बाल:—(क्रीडनकमाधत्ते) मातः, रोचते माम् एष भद्रमयूरः।

प्रथमा—( विलोक्य सोद्वेगम् ) अहो रक्षाकरण्डकमस्य मणिबन्धे न दृश्यते।

राजा—अलमावेगेन। नन्विदमस्य सिंहशावकविमर्दात्परिभ्रष्टम्। ( इत्यादातुमिच्छति )

उभे—मा खल्विदमवलम्बय। कथं गृहीतमनेन। ( विस्मयादुरोनिहितहस्ते परस्परमवलोकयतः )

राजा—किमर्थं प्रतिषिद्धाः स्मः।

प्रथमा—शृणोतु महाराज! एषा अपराजितानामौषधिरस्य जातकर्मसमये भगवता मारीचेन दत्ता। एतां किल मातापितरौ आत्मानं च वर्जयित्वा अपरः भूमिपतितां न गृह्णाति।

राजा—अथ गृह्णाति ?

प्रथमा—ततस्तं सर्पो भूत्वा दशति।

राजा—भवतीभ्यां कदाचिदस्याः प्रत्यक्षीकृता विक्रिया ?

उभे—अनेकशः।

राजा—( सहर्षमात्मगतम् ) कथमिव सम्पूर्णमपि मे मनोरथं नाभिनन्दामि। ( बालं परिष्वजते )

द्वितीया—सुव्रते एहि। इमं वृत्तान्तं नियमव्यापृतायै शकुन्तलायै निवेदयावः।

( निष्क्रान्ते )

बालः—मुञ्च माम्। यावन्मातुः सकाशं गमिष्यामि।

राजा—पुत्रक, मया सहैव मातरमभिनन्दयिष्यसि।

बालः—मम खलु तातो दुष्यन्तः। न त्वम्।

राजा—( सस्मितम् ) एष विवाद एव प्रत्याययति।

**प्रश्नाः**

१. दुष्यन्तः किं कुर्वन्तं भरतमपश्यत् ?
२. 'सर्वदमन' नाम्नः किं वैशिष्ट्यं कथं तापस्या प्रतिपादितम् ?
३. मृत्तिकामयूरानयनं कथमनिवार्यमभूत् ?
४. तापसीप्रार्थितः दुष्यन्तः भरतं किमपृच्छत् ?
५. बालस्पर्शमुपलभ्य दुष्यन्तेन किं विचारितम् ?
६. कथं कथं तेन सम्भावितं स्वपक्षसिद्ध्यर्थम् ?
७. रक्षाकरण्डकोत्थाने तापसीभिः किं किं सम्भावितम् ?
८. अपराजितायाः किं कार्यमासीत् ?
९. 'पुत्रक'शब्देन सम्बोधितो भरतः किमुदतरत् ?



# युक्तिः शक्तेर्गरीयसी

उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः ।
काक्या कनकसूत्रेण कृष्णसर्पो निपातितः ॥

कस्मिंश्चित्प्रदेशे महातरौ वायसदम्पती प्रतिवसतः स्म । अथ काक्याः प्रसवकाले वृक्षविवरान्निष्क्रम्य कृष्णसर्पः सदैव तदपत्यानि भक्षयति । ततस्तौ निर्वेदादन्यवृक्षमूलनिवासिनं प्रियसुहृदं शृगालं गत्वा ऊचतुः—'भद्र ! किमेवंविधे संजाते आवयोः कर्तव्यं भवति । एष तावद् दुष्टात्मा कृष्णसर्पो विवरान्निर्गत्य आवयोर्बालकान् भक्षयत्येव । तत्कथ्यतां तद्रक्षार्थं कश्चिदुपायः ।

यस्य क्षेत्रं नदीतीरे भार्या च परसङ्गता ।
ससर्पे च गृहे वासः कथं स्यात्तस्य निर्वृतिः ॥

अन्यच्चास्माकमपि तत्रस्थानां प्रतिदिनं प्राणसंशयः ।

स आह—नात्र विषये विषादः कार्यः । नूनं स लुब्धो नोपायमन्तरेण वध्यः स्यात् ।

उपायेन जयो यादृग्रिपोस्तावन्न हेतिभिः ।
उपायज्ञोऽल्पकायोऽपि न शूरैः परिभूयते ॥

तथा च—

भक्षयित्वा बहून् मत्स्यानुत्तमाधममध्यमान् ।
अतिलौल्याद् बकः कश्चिन्मृतः कर्कटकग्रहात् ॥

तावूचतुः—'कथमेतत्' ? सोऽब्रवीत्—

अस्ति कस्मिंश्चित्प्रदेशे नानाजलचरसनाथं सरः । तत्र च कृताश्रयो बक एको वृद्धभावमुपागतो मत्स्यान् व्यापादयितुमसमर्थः आसीत् । ततश्च क्षुत्क्षामकण्ठः सरस्तीरे उपविष्टः मुक्ताफलसदृशैरश्रुप्रवाहैर्धरातलमभिषिञ्चन् रुरोद । एकः कुलीरको नानाजलचरसमेतः समेत्य तस्य दुःखेन दुःखितः सादरमिदमूचे—'भाव ! किमद्य त्वया नाहारवृत्तिरनुष्ठीयते । केवलमश्रुपूर्णनेत्राभ्यां सनिःश्वासेन स्थीयते ।' स आह—'वत्स, सत्यमुपलक्षितं भवता । मया हि मत्स्यादनं प्रति परमवैराग्यतया साम्प्रतं प्रायोपवेशनं कृतम् । तेनाहं समीपगतानपि मत्स्यान्न भक्षयामि ।' कुलीरकस्तच्छ्रुत्वा प्राह—'किं त्वद्वैराग्यकारणम् ?' स प्राह—'वत्स, अहमस्मिन् सरसि जातो वृद्धिं गतश्च । तन्मया एतच्छ्रुतं यद् द्वादशवार्षिक्यनावृष्टिः सम्पद्यते लग्ना ।' कुलीरक आह—'कस्मात्तच्छ्रुतम् ?' बक आह—'दैवज्ञमुखात् । यतः शनैश्चरो रोहिणीशकटं भित्त्वा यास्यति । उक्तं च वराहमिहिरेण—

यदि रोहिण्याः शकटं भिनत्ति रविनन्दनो गगनवीथ्याम् ।
द्वादशवर्षाणि तदा नहि वर्षति वासवो भूमौ ॥

तदेतत्सरः स्वल्पतोयं वर्तते । शीघ्रं शोषं यास्यति । अस्मिन् शुष्के यैः सहाहं वृद्धिं गतः सदैव क्रीडितश्च ते

सर्वे तोयाभावान्नाशं यास्यन्ति । तत्तेषां वियोगं द्रष्टुमहमसमर्थः । तेनैतत्प्रायोपवेशनं कृतम् । साम्प्रतं सर्वेषां तु अल्पजलाशयानां जलचरा गुरुजलाशयेषु स्वस्वजनैर्नीयन्ते । केचिच्च मकरगोधाशिशुमारजलहस्तिप्रभृतयः स्वयमेव गच्छन्ति । अत्र पुनः सरसि ये जलचरास्ते निश्चिन्ताः सन्ति । तेनाहं विशेषाद्रोदिमि यद्बीजशेषमात्रमप्यत्र नोद्धरिष्यति ।' ततः स तदाकर्ण्यान्येषामपि जलचराणां तत्तस्य वचनं निवेदयामास । अथ ते सर्वे भयत्रस्तमनसः मत्स्यकच्छपप्रभृतयोऽभ्युपेत्य तं पप्रच्छुः—'भाव ! अस्ति कश्चिदुपायो येनास्माकं रक्षा भवति ।' बक आह—'अस्त्यस्य जलाशयस्य नातिदूरे प्रभूतजलसनाथं सरः पद्मिनीषण्डमण्डितं यच्चतुर्विंशत्यापि वर्षाणामवृष्ट्या न शोषमेष्यति । तद्यदि मम पृष्ठं कश्चिदारोहति तदहं तं तत्र नयामि ।'

अथ ते तत्र विश्वासमापन्नाः 'तात, मातुल, भ्रातः' इति ब्रुवाणाः 'अहं पूर्वमहं पूर्वम्' इति समन्तात् परितस्थुः । सोऽपि दुष्टाशयः क्रमेण तान् पृष्ठे आरोप्य जलाशयस्य नातिदूरे शिलां समासाद्य तस्यामाक्षिप्य स्वेच्छया भक्षयित्वा भूयोऽपि जलाशयं समासाद्य जलचराणां मिथ्यावार्तासन्देशकैर्मनांसि रञ्जयन्नित्यमेवाहारवृत्तिमकरोत् । अन्यस्मिन् दिने स कुलीरकेणोक्तः—'मातुल ! मया सह ते

प्रथमं स्नेहसंभाषणं संजातम्। तत्किं मां परित्यज्य अन्यान्नयसि। तस्मादद्य मे प्राणत्राणं कुरु।' तदाकर्ण्य सोऽपि दुष्टाशयश्चिन्तितवान्—'निर्विण्णोऽहं मत्स्यमांसादनेन। तदद्यैनं कुलीरकं व्यञ्जनस्थाने करोमि।'

इति विचिन्त्य तं पृष्ठे समारोप्य तां वध्यशिलामुद्दिश्य प्रस्थितः। कुलीरो दूरादेवास्थिपर्वतं शिलाश्रयमवलोक्य मत्स्यास्थीनि परिज्ञाय तमपृच्छत्—'मातुल! कियद्दूरे स जलाशयः। मदीयभारेणातिश्रान्तस्त्वं, तत्कथय।' सोऽपि मन्दधीर्जलचरोऽयमिति मत्वा स्थले न प्रभवतीति सस्मितमिदमाह—'कुलीरक, कुतोऽन्यो जलाशयः? मम प्राणयात्रेयम्। तस्मात्स्मर्यतामात्मनोऽभीष्टदेवताः। त्वामप्यस्यां शिलायां निक्षिप्य भक्षयिष्यामि।' तत्क्षण एव कर्कटेन स्ववदनदंशद्वयेन मृणालनालधवलायां मृदुग्रीवायां गृहीतो मृतश्च।

अथ स तां बकग्रीवां समादाय शनैः शनैस्तज्जलाशयमाससाद। ततः सर्वैरेव जलचरैः पृष्टः—'भोः कुलीरक! किं निवृत्तस्त्वम्? स मातुलोऽपि नायातः, तत्किं चिरयति। वयं सर्वे सोत्सुकाः। कृतेक्षणास्तिष्ठामः।' एवं तैरभिहिते कुलीरकोऽपि विहस्योवाच—'मूर्खाः, सर्वे जलचरास्तेन मिथ्यावादिना वञ्चयित्वा नातिदूरे शिलातले प्रक्षिप्य भक्षिताः। तन्मया आयुःशेषतया तस्य

विश्वासघातकस्याभिप्रायं ज्ञात्वा ग्रीवेयमानीता। तदलं सम्भ्रमेण। अधुना सर्वजलचराणां क्षेमं भविष्यति।'

अतोऽहं ब्रवीमि—'भक्षयित्वा बहून्मत्स्यान्' इति। वायस आह—'भद्र! तत्कथय कथं स दुष्टसर्पः वधमुपैष्यति?' शृगाल आह—'गच्छतु भवान् किञ्चिन्नगरं राजाधिष्ठानम्। तत्र कस्यापि धनिनो राजामात्यादेः प्रमादिनः कनकसूत्रं हारं वा गृहीत्वा तत्कोटरे प्रक्षिपतु। येन सर्पस्तद्ग्रहणेन वध्यते।' अथ तत्क्षणात्स काकः काकी च तदाकर्ण्यात्मेच्छयोत्पतितौ। ततश्च काकी किञ्चित्सरः प्राप्य यावत्पश्यति तावत्तन्मध्ये कस्यचिद्राज्ञोऽन्तःपुरं जलासन्नं न्यस्तकनकसूत्रं मुक्तमुक्ताहारवस्त्राभरणं जलक्रीडां कुरुते। अथ सा वायसी कनकसूत्रमेकमादाय स्वगृहाभिमुखं प्रतस्थे। ततश्च कञ्चुकिनो वर्षवराश्च तन्नीयमानमुपलक्ष्य गृहीतलगुडाः सत्वरमनुययुः। काक्यपि सर्पकोटरे तत्कनकसूत्रं प्रक्षिप्य सुदूरमवस्थिता। अथ यावद्राजपुरुषास्तं वृक्षमारुह्य तत्कोटरमवलोकयन्ति तावत्कृष्णसर्पः प्रसारितभोगस्तिष्ठति। ततस्तं लगुडप्रहारेण हत्वा कनकसूत्रमादाय यथाभिलषितं स्थानं गताः। वायसदम्पती अपि ततः परं सुखेन वसतः।

प्रश्नाः

१. कृष्णसर्पः किं करोति स्म?

२. कुत्र वासेन निर्वृतिः अप्राप्या?

३. बकः कथं तत्र रुरोद ?

४. कुलीरकेण बकः किमुक्तः ?

५. कुलीर-बकयोरालापं वर्णयत ।

६. अवर्षणार्थं वराहमिहिरेण किमुक्तम् ?

७. बकः मत्स्यादीन् किमुदतरत् ?

८. बकः कथं कुलीरकेण व्यापादितः ?

९. एकैकमादाय स किं कुरुते स्म ?

१०. 'भक्षयित्वा बहून् मत्स्यान्' इत्यस्याख्यानं वर्णयत ?

११. शृगालप्रतिपादितया कया युक्त्या कथं च कृष्णसर्पः हतः ?



# भूकम्पः

इयं धरा सर्गादावेव यथाधुना दृश्यते तथा नोदपद्यत । वैज्ञानिकाः कथयन्ति जलमयीं सृष्टिं प्रथमाम् । मनुरप्यर्थमिममनुमोदयतिस्म–'अप एव ससर्जादौ तासु वीर्यमवासृजत्' । ताश्चापः क्रमशो घनीभावमापन्नाः भूभावं भेजिरे । अस्याश्च घनीभूतायाः मध्ये भागे कतिपये तैजसाः धातूपधातुखनिजपदार्थास्तरला दीप्तिमन्तो दाहकाः



शीतशीताश्च सन्ति स्थानभेदेन भिन्नप्रकृतयो भिन्नफलाश्च । तैश्च पदार्थैरस्याः पृथिव्याः बहवो लाभाः सम्भवन्ति । पृथिव्यां पातितस्य जलादेस्तरलस्य, निखातस्य वा वस्तुनः शोषणादिना समशीतोष्णतासम्पादनं तैरेव क्रियते । अस्याः वसुन्धरापदप्राप्तेः साधनानि च रत्नानि तैरेव पच्यमानानि दीप्तिभाञ्जि जायन्ते । इयं चेदृशी पृथिवी तेषामेव तैजसपदार्थानां संयोगमात्रा-

धिक्यादिना विशेषान्यतमेन जाते ज्वालाधिक्ये तन्महिम्नैव चलति, स एव भूकम्पः इति केचित्।

कतिचन वैज्ञानिकास्तु पृथिव्याः बहुस्तरतां ब्रुवाणा अधोऽवस्थितस्य स्तरस्यैकस्य स्वाभाविकेनान्तरवस्थित-ज्वालाजालकृतेन वा पातेनायं भूकम्पो जन्यते इत्याहुः।

भारतीया सनातनधर्मानुसारिणी जनता तु भुवं पृष्ठदेशे बिभ्रतः शेषनागस्य पार्श्वपरिवर्त्तनमत्र कारणमाह। स चायं भूकम्पः भूयसा तत्रैव भवति, यत्र भूभागे ज्वालामुखी लीना भवति। एवमपि दृश्यते यत्र भूयो भूयो भूः कम्पते तत्र ज्वालामुख्यपि कदाचित् स्फुटति। अद्यावधि स्मर्यतेऽस्य भयानकः प्रकोपो 'लीमा' नामके स्थाने १७४७ ख्रिष्टाब्देऽजायत। १७५५ ख्रिष्टाब्दे पोर्तुगालानां राजधान्यां लिस्बननगरे महाभीमः भूकम्पोऽभवत्। अस्मिंश्च भूकम्पे यूरोपदेशोऽप्यस्य कम्पस्यानुभवमकृत। जापानदेशे जातः १९२५ ख्रिष्टाब्दीयः भूकम्पस्तु तस्य देशस्य अर्द्धावशेषलोकतां लुप्यमानसर्वव्यवस्थां च व्यधित। भारतेऽपि १८८७ ख्रिष्टाब्दे वेगेनैव भूकम्पो जातः। प्रत्यग्रः सम्प्रत्यपि स्मर्यमाणदुरन्तभावः १९३४ ख्रिष्टाब्दीयो भूकम्पस्तु प्रायो नूतन एव जनानां मनसि। अनेन हि धूलिसात्कृतानां भवनानां दशा बहुषु स्थलेषु प्रागिवाधुनापि नाजायत। क्षणेनैकेन निःशेषीकृतस्य

परिवारस्य, उर्वरायाः अपि सिकतामयीभावं गतायाः भुवः, कलकलनादेन वहन्त्या अपि नद्याः शुष्यमाणतया सद्यः समतलवालुकामयक्षेत्रतासम्पत्तेश्च स्मरणेन कम्पमिवाकलयति स्वान्तम्। कलाद्वयात्मकः एव कालोऽनेन भीषणभूकम्पेन नीयमानो लोकानां यातायातान् दैनन्दिनोपयोगयोग्यसामयिकसाधनसमुदयं सामग्रीसम्पदं च तथा ध्वंसावशेषतामनैषीत्, यथा लोकाः शताब्दीपञ्चात्मकं कालं प्रागनुगमिताः। माता पुत्रं, पतिः प्रियां, श्वश्रूः स्नुषां, भ्राता भगिनीं च हित्वा प्राणमात्ररक्षणप्रयासे व्यग्रतया पलायन्त इति समस्तादपि महता क्लेशेन सञ्चितां सम्पदं परित्यज्य प्राणमात्रस्य रक्षायै च लोकान्धवतो वीक्षितवतां हृदि 'आत्मनस्तु कामाय सर्वं प्रियं भवति' इति श्रुतिरगमच्चरितार्थभावम्।

अनेन भूकम्पेन महती क्षतिः सम्पाद्यते। तृणनिर्मितानि गृहाणि विहाय अन्यानि भवनानि पतन्ति, तदधश्च लोकानां संहारो जायते। जगत्या व्यथामिव सोढुम् अशक्नुवत्या धराया हृदयं विदीर्यते। क्वचिद् भुवोऽन्तरालान्निर्गतस्य तरलस्य तैजसस्य च पदार्थस्य प्रभावेण अग्निकाण्डमपि लङ्काकाण्डं पुनरावर्त्तयति। लोकानां दारिद्र्यं शताब्द्याः एकस्याः कृते पुनरुदयमुपैति। तात्कालिकी दशा तु पुनरनार्यावस्थां स्मारयति।

ईदृशश्चायं भूकम्पः सर्वैरपि भयेन, उत्पाततया विचित्रेणेव कम्पनोपनीयमानचेतश्चाञ्चल्यकरणेन भावेन स्मर्यते। अस्य प्रभावं कुण्ठयितुं लौहकीलमभ्यन्तरीकृत्य इष्टिकाभवनानि निर्मान्ति धनिकाः। क्वचित् काष्ठपट्टकैरपि सदनानि निर्मान्ति। दरिद्राणां तु तृणमयमेव कुटीरं परित्रायते तान्। यस्मिन् देशे भूयो भूयोऽयम् उद्भवति, तत्र त्वस्योपयोगः कियतांशेन परिचयं प्राप्त इवाल्पो भवति। भारते तु चिरादयमायाति, तेनात्र महत्यस्य विभीषिका। भगवान् अतोऽस्मान् रक्षतु।

**प्रश्नाः**

१. वैज्ञानिकाः पृथिव्याः सृष्टिं कथं मन्यन्ते ?
२. वैज्ञानिकाः भूकम्पस्य किं कारणं प्रतिपादयन्ति ?
३. अपरे वैज्ञानिकाः किं कथयन्ति ?
४. भारतीयाः किमभिदधति ?
५. मुख्य-मुख्य-भूकम्पानां तिथीः श्रावय।
६. १९३४ ख्रिष्टाब्दीयां भूकम्प-विनाशलीलां वर्णयत ?
७. भूकम्पेन कीदृशी क्षतिः सम्पाद्यते ?
८. भूकम्पस्य प्रभावं कुण्ठयितुं किंविधानि भवनानि निर्मीयन्ते ?



# स्त्री-शिक्षा

साम्प्रतं जगति चिराय उपेक्षितायाः स्त्रीजातेरुद्धोधनस्य शिक्षायाश्च महान् प्रश्नः। मानवजातेश्चतुरस्रसमुन्नतौ पुरुषाणां स्त्रीणां च परस्परं बुद्धिपूर्वकस्य सहयोगस्यापरिहार्यत्वेन आवश्यकता केन नानुभूयते। यथा एकेन चक्रेण रथस्य गतिर्न भवति, तथैव स्त्रीणां सहयोगेन विना सा समुन्नतिः साधयितुं न शक्यते।

पुरुषाणां सहायतया परिवारस्य पालनं, स्वबालकेषु गुण-गण-साहसोत्पादनं सांसारिककार्यक्लिष्टानां पतिपुत्रादिप्रियपरिवारपरिजनानां स्वैर्मधुरैरालापैः प्रसादनं च स्त्रीशिक्षया विना नोत्तमं भवितुमर्हति। यदि साध्वी शिक्षा स्त्रीभिः नाधिगता, कार्याणीमानि साधु न सिद्ध्यन्ति, वैरस्येन वैषम्येण च क्रियमाणान्यपि कार्याणि न सन्तोषाय अलं भवन्ति।

प्रबन्धः पाकालयस्य न सर्वसाधारणानुष्ठेयस्तदर्थमपि ज्ञानराशिरपेक्ष्यते, अत एव च द्वित्रा नलभीमादयः एव पाकपण्डिताः परिगणिताः। अत्र विषये नलपाकप्रभृतयो ग्रन्था अपि दृश्यन्ते, न चान्तरेण साधीयसीं शिक्षां कस्यापि पाककलायामीदृश्यां संभवति प्रवेशः।

स्त्रियो हि गृहाधिष्ठात्र्यो मन्यन्ते। जगति यावन्तः अभ्युदयभाजो दृश्यन्ते जनास्तेषां देव्योऽवश्यं प्रबन्धचतुराः स्युरन्यथा वह्वर्जयन्तोऽपि पुरुषाः स्त्रीभिरनावश्यक-वृथाव्ययविनियुक्तसाधनास्सन्तोऽत्यर्थमुद्विजेयुः क्लेशं च सहेरन्।

बालाः शिक्षिताः स्युरित्यपि गृहस्थानां कर्तव्येषु प्रधानं कर्तव्यम्। एतच्च कार्यं यथा दयाद्रुतचित्ताभिः स्त्रीभिः साधु सम्पाद्येत न तथा पुरुषैः। अशिक्षिताश्च मातरः कथमिव तदनुष्ठाने प्रभवेयुः। अतः विना द्रव्यव्ययं सन्ततीनां जीवनं शिक्षया साधु समुत्कर्षयितुम् अपि स्त्रीणां शिक्षणमावश्यकम्।

'सत्यां शिक्षायां स्त्रियो नश्यन्ति' इति यदुक्तं न तन्मनोहरं, सत्यं दुश्शिक्षया तथा भवति, हेया च सा। परं शिक्षा तु तासां पातिव्रत्ये निष्ठां, प्रेमपरायणतां, दासी-पदगौरवं च समेधयति।

'शिक्षिताः स्त्रियः पुरुषैः स्पर्धेरन्' इत्यपि अलीकमेव वचः। शिक्षया जनितविवेकानां तासां कर्तव्यज्ञानोदये जाते स्पर्द्धाबुद्धेरेव बाधपराहतेः, प्राचीनमादर्शं पुरतः कृत्वा प्रदीयमानया शिक्षया मनसः साधुपथे प्रवृत्तिः सम्पाद्यते तथा च स्पर्द्धायाः कथैव नोदयते।

उक्तलाभसमूहहेतोरेव वर्तमानभारतेऽप्येष प्रश्नो जागर्तितराम्। तत्रास्मिन् विषये बहवोऽवान्तरप्रश्नाः समुत्तिष्ठन्ति।

यद्यपि उपर्युक्तलाभानां परिगणनानन्तरं स्त्रीणां शिक्षायाः आवश्यकताविषये दिष्ट्या नहि साम्प्रतं कश्चिद्विवादः। 'स्त्रीशूद्रौ नाधीयाताम्' एतादृशप्रमाणाभासेषु श्रद्धावतां पण्डितंमन्यानां बाहुल्येन विलोप एव सञ्जातः साम्प्रतिकभारते।

'मातृमान् पितृमान् आचार्यवान् पुरुषो वेद', 'सहस्रं तु पितॄन् माता गौरवेणातिरिच्यते' इत्यादिप्रमाणानुरूपं बालकानां बालिकानां च, विशेषतः शैशवावस्थायां, शिक्षायै, गार्हस्थ्यकार्याणां सुचारुरूपेण सम्पादनार्थम्, अथ च गृहवातावरणे स्वर्गीयसुखशान्त्योरानयनाय स्त्रीणां शिक्षायाः आवश्यकता प्रायः सर्वैरप्यभ्युपगम्यते।

तथापि 'स्त्रीणां शिक्षा कथं भवेत्', 'कीदृशी च भवेत्' इत्यस्मिन् विषये विद्यते मतबाहुल्यं विचारकाणाम्।

'सा शिक्षा कथं भवेत्' इत्यस्मिन् विषये कन्यकानां कुमारकाणां च सहैव शिक्षा भवेदित्येके मन्यन्ते। परस्परसमुचितसंमानभावनायाः पोषणार्थम्, स्वाभाविकसामाजिकजीवने चारित्र्यस्य दृढतायै च सहशिक्षायाः

कथंचिदुपयोगित्वेऽपि तदनन्तरं सा लाभापेक्षया सुतरां हानिकरी इत्यपरे आतिष्ठन्ते।

'स्त्रीणां शिक्षा कीदृशी भवेत्' इत्यस्मिन् विषयेऽपि वैमत्यं विदुषां संलक्ष्यते।

'पुरुषाणां स्त्रीणां च कार्यकरणशक्तयः समानाः इति तेषामधिकारा अपि समाना एव। अत एव जीवनयात्रायां स्वकीयस्वाभाविकसत्प्रवृत्तीनां समुचितविकासार्थं, तदर्थं च अवसराणां समानत्वेन लाभार्थं पुरुषाणामिव स्त्रीणामपि शिक्षाविषयकः कश्चिदपि प्रतिबन्धोऽवाञ्छनीय' इत्येव केचिन्मन्यन्ते शिक्षाविशारदाः।

अपरे पुनरेतन्नाभ्युपगच्छन्ति। तेषां चैष युक्तिवादः। पुरुषाणां स्त्रीणां च तावत् प्रातिस्विको भेदः केन न स्वीक्रियेत। प्रकृत्यैव तेषां प्रातिस्विकं ( प्रत्येकपदार्थसम्बन्धि ) कार्यं विभिन्नम्। अत एव नैव तेषामाधिकारिकसमानतया परस्परमविरोधः स्थापनीयः, किन्तु परस्परापेक्षावत्त्वेनैव। जायां लब्ध्वा हि आत्मनः पूर्णतायाः अनुभवो यथा पुरुषस्य भवति, एवमेव पतिं लब्ध्वा जायाया अपि। एतदेव तयोः परस्परापेक्षावत्त्वम्। एवं चेत्, स्त्रीणां प्रातिस्विकीनां प्रवृत्तीनां शक्तीनां च विकास एव तासां शिक्षायाः प्रधानं लक्ष्यं भवेदित्येव तेषामभिप्रायः।

अनेनैवाभिप्रायेण श्रुतिराह 'जायेदस्तम्' ( जाया इत् अस्तम् = जायैव गृहं भवतीत्यर्थः—ऋग्वेदे ३।५३।४ )। लौकिकाः अप्याहुः 'गृहिणी गृहमुच्यते' इति।

ततश्च गार्हस्थ्यजीवनस्यैव दृष्ट्या प्राधान्येन स्त्रीणां शिक्षायाः, तद्विषयाणां च विचारो विधेयः। नानाविध-संघर्षैः नितरां विषमे संसारे जीवनं यापयतां स्वकीय-गृहाभ्यन्तरजीवन एव सुखशान्त्योराशा भवितुमर्हति। जीवनस्य यावान् कालः स्वगृहाभ्यन्तरे याप्यते जनेन, न हि तावान् बाह्यसंसारे। बाल्यकाले च मातृसम्पर्केण बद्धमूलाः संस्कारा यावज्जीवनं स्थायिनो भवन्ति। तदेवं गार्हस्थ्यजीवनस्य सुमहत् माहात्म्यम्। तच्च अन्ततः स्त्रीषु अवतिष्ठते। ततश्च तस्यैतस्य वैशिष्ट्यस्य रक्षा पुष्टिश्च यथा सम्पद्येत, तादृशी एव शिक्षा स्त्रीणां विशेषतोऽपेक्षिता।

साधुनि तत्त्वावधाने भारतीयमादर्शं पुरस्कृत्य दीय-मानया स्त्रीशिक्षया देशस्य समाजस्य जातेश्चोपकारो भविष्यति। शिक्षायां नियुज्यमाना विषयाश्च—परिवार-परिचालनप्रकारः, चिकित्साशास्त्रम्, इतिहासभूगोलौ, नागरिकशास्त्रम्, धर्मशास्त्रम्, नीतिशास्त्रम्, समाज-शास्त्रम्, एतदतिरिक्तमपि गृहोपयोगि शास्त्रम्। स्त्रीणां कृते विश्वविद्यालयीयोपाधिप्राप्तिर्नापेक्षिता, न वा केवल-

मक्षरमक्षिकापरिचयमात्रमुपयुज्यते, उभयथापि दोषदर्शनात्। अतिशयितशिक्षायाः गृहप्रबन्धेऽनुपयुक्तत्वादक्षरज्ञानमात्रेण च शिक्षोद्देश्यासिद्धेः। अतः साधु विविच्य निर्धार्यमाणा शिक्षापद्धतिः स्त्रीणां सुखोदर्कतायै युज्यते।

यत्र परिवारे स्त्रियो न शिक्षिताः, सत्यं, स परिवारो दुःखभाक्। कलहालस्यवैराणां सततप्रतिष्ठानास्पदस्य तादृशस्य परिवारस्य दुःखभागितायाः अविवादसिद्धत्वात्। दारिद्र्यं, बालमूर्खत्वं, परस्परमप्रीतिश्च तत्र सदा वसतीति ध्यात्वा सर्वैः स्वाः बालिकाः शिक्षणीयाः। स्त्रीणां शिक्षया हि कुलमुज्ज्वलं श्रीसमृद्धिश्च समुदयत इति।

**प्रश्नाः**

१. स्त्रीशिक्षां विना किमसम्भवम् अमन्यत ?
२. पुरुषाः कदा अत्यर्थं कष्टमनुभविष्यन्ति ?
३. शिशूनां शिक्षणार्थं स्त्रीशिक्षणं कथमनिवार्यं प्रतिपादितम् ?
४. कैर्हेतुभिः स्त्रीणां शिक्षाया आवश्यकताऽधुना सर्वैः स्वीक्रियते ?
५. स्त्रीणां शिक्षा कीदृशी भवितव्या ?
६. स्त्रीशिक्षायां के विषयाः निर्धारणीयाः ?
७. कः परिवारः दुःखभाक् ?
८. किमुद्दिश्य स्वबालिकाः शिक्षणीयाः ?



# चलचित्रम्

साम्प्रतं समस्ते विश्वस्मिन् विज्ञानस्य प्रभावः विशेष-रूपेण विद्यते। जीवनस्य सर्वेष्वेव क्षेत्रेषु विलोक्यते विज्ञानस्य साम्राज्यम्। सम्पूर्णा प्रकृतिः अखिलो मानव-समाजश्च अस्य महिम्ना प्रभावितोऽस्ति। अनेन मानव-जीवनं समस्तमेव नवीनस्वरूपे परावर्तितम्। नूतनैः अन्वेषणैः, अभिनवैः आविष्कारैश्च अभूतपूर्वैव समुन्नतिः संजाता संसारस्य। अनेन सुखस्य मनोरञ्जनस्य च असंख्यानि साधनानि समुत्पादितानि। समस्तं दिवसं घोरपरिश्रमं विधाय परिश्रान्ताः मानवाः सायङ्काले मनोविनोदं लभन्ते चित्रपटस्य दर्शनेन। अत एव साधा-रणजनतया बहुलं प्रेम प्रदर्शितं श्रमापनोदनक्षमाय अस्मै चलचित्राय।

षष्ट्यधिके अष्टादशशततमे (१८६०) ईशवीये वर्षे अमेरिकादेशे अभूदस्य प्रथम आविष्कारः। त्रयोदशा-धिके ऊनविंशतिशततमे (१९१३) ईशवीये वर्षे भारत-वर्षे अस्य आदिमं चित्रनिर्माणं संजातम्। प्रथमतस्तु चित्रपटे मूकचित्राणामेव हावभावादयः प्रदर्शिताः अभूवन्। अनन्तरं चित्रेषु वाचामपि समजायत सम्यक्

संचारः। इदानीं तु चित्रपटः महतीं समृद्धिं समधिगम्य दर्शकानां मनांसि मोहयति। सङ्गीतं, नृत्यं, युद्धदृश्यं, महोत्सवानां समारोहादयश्च सम्यग्रूपेण अभिनीयन्ते अभिनेतृभिः अभिनेत्रीभिश्च।

कलिकाता, मुम्बापुरी, लक्ष्मणपुरम्, इन्द्रप्रस्थम् इत्यादि प्रसिद्धेषु महानगरेषु बहूनि चलचित्रमन्दिराणि दर्शकाणां मनोविनोदाय निर्मितानि सन्ति। साधारणानि अपि नगराणि अलंकृतानि सन्ति चलचित्रमन्दिरैः। धनवन्तः, निर्धनाः, वृद्धाः, युवानः, बालकाः, स्त्रियः, विद्वांसः, अज्ञाः, कृषकाः, श्रमिणः सर्वे एव पश्यन्ति सप्रेम चलचित्रम्। सर्वेषां विद्यार्थिनां विशेषतः विश्वविद्यालयानाम् उच्चकक्षाणां छात्राणां दृश्यते प्रेमातिशयः चलचित्रेषु। साधारणजनतायाः मनोरञ्जनाय नाटकापेक्षया चलचित्रम् अधिकं प्रेमास्पदम्। मनोहराणि प्राकृतिकदृश्यानि, मधुराणि गीतानि, अद्भुताश्च कथाः केषां सचेतसां मनांसि न हरेयुः!

चलचित्रोद्योगः समयेऽस्मिन् संसारे अन्यान्यविशालोद्योगेषु गण्यते। अस्योन्नयने सर्वे राष्ट्रियशासकाः स्वहित-साधनम् अवगच्छन्ति। राष्ट्रिय-आय-वर्धने, राजनीतिक-आर्थिक-धार्मिक-सांस्कृतिकविचाराणां प्रचारे अन्ताराष्ट्रिय-

सद्भावनायाः वृद्धौ च चलचित्रम् अपूर्वभूमिकां सम्पादयति ।

अद्यत्वे चलचित्रं न केवलं मनोरञ्जनसाधनम् अपि तु अनेकधा समाजानां कृते उपयोगि संजातम् । मनोरञ्जनापेक्षया शिक्षायाः सदाचारस्य च प्रचाराय प्रधानं साधनं संभवेत् चलचित्रम् । पाश्चात्यदेशेषु शिक्षायाः, देशभक्तेः, समाजोद्धारस्य च प्रचारार्थम् उपयुज्यन्ते चलचित्राणि । अस्माकं भारतवर्षेऽपि यदि इतिहासस्य, भूगोलस्य, विज्ञानस्य, स्वदेशोत्थानस्य, समाजोन्नतेः, कृषिवाणिज्योद्धारस्य च प्रचाराय चलचित्राणाम् उपयोगः स्यात्तर्हि स्वदेशस्य महान् अभ्युदयः साधितः भवेत् । विदेशेषु आविष्कृतानां वैज्ञानिकानां कृषिसाधकानां, स्वास्थ्यरक्षकाणां च उपायानाम् उपयोगः सुलभतया शिक्षयितुं शक्यः चलचित्राणां साहाय्येन ।

परन्तु देशस्य दुर्दैवेन यादृशी हानिः, यादृशं पतनं, संपादितं भारतीयानां विशेषतः यूनां, युवतीनां, विद्यार्थिनां, विद्यार्थिनीनां च चलचित्रेण, न तादृशी क्षतिः, तादृशं पतनं च कृतं व्यसनान्तरशतैरपि । लोभग्रस्ताः चलचित्रव्यवस्थापकाः स्वदेशवासिनां पूर्णतः विनाशं कृत्वापि येन केनापि विधिना तेषां धनापहरणमेव स्वकीयं

लक्ष्यं निश्चित्य चरित्रहीनानां स्त्रीणां पुरुषाणां च परस्परम् अश्लीलान् दुराचारान् चित्रपटेषु प्रदर्श्य भाविनागरिकाणां यूनां युवतीनां च मूलोच्छेदं कुर्वन्ति । बहवः मनुष्याः भविष्णवश्च उत्तरदायिजनाः निर्धनाः, अस्वस्थाः, तस्कराः, दुश्चरित्राश्च संजाताः चलचित्रस्य दुष्प्रभावेण । अनेके छात्राः स्वाध्यायमुत्सृज्य स्वेच्छाचारिणः संजाताः चलचित्रस्य कुपरिणामेन ।

अतः चलचित्रे आमूलपरिवर्तनं विधेयं शासकैः । उपेक्षणीयानां बीभत्सानाम् अंशानाम् निष्कासनम् अश्लीलभागस्य च सर्वथा बहिष्कारो विधेयः । आचारशिक्षकाणां चित्राणाम् , कथांशकानाम् , अतीतभारतस्य गौरवशालिपरम्पराणां, महापुरुषाणां, साहसिकबालकानां, वैज्ञानिकानां वीरपुरुषाणां च जीवनीनां सन्निवेशः चलचित्रेषु भवेत् । स्वदेशे जायमानानां प्रगतीनाम् , औद्योगिकविकासानां, राष्ट्रिययोजनानाञ्च प्रदर्शनं चलचित्रेणैव सम्पादनीयम् । संसारे क्रियमाणानां महासम्मेलनानां, विश्वशान्तिसम्मेलनानां च प्रदर्शनं सांसारिकमैत्रीसम्बन्धार्थं सद्भावनावृद्ध्यर्थं च विधेयमेव ।

अस्मिन् स्थले भारतीयशासकानाम् योजना प्रशंसनीया । 'केन्द्रीय सेन्सर बोर्ड' समित्या चित्राणां वर्गीकरणं प्रारब्धम् । कानिचिच्चित्राणि वयस्कानामेव कृते

अन्यानि च समेषां कृते आज्ञप्तानि भवन्ति । भारतीय-शासकेन बालचित्रप्रतियोगितापि आयोजिता, यत्र सर्व-श्रेष्ठबालचित्र-निर्मातृभ्यः पारितोषिकमपि प्रदीयते । एतेन बालानां कृते शिक्षात्मकानि चित्राणि सम्पत्स्यन्ते । भार-तीयशासकेन स्वयमपि बालचलचित्रनिर्माणार्थं 'स्टूडियो' ( चिल्ड्रेन फिल्म सोसायटी ) इत्येतस्य स्थापनेन उत्तम-चलचित्राणाम् आशा बलवती प्रतीयते ।

आधुनिकैः चलचित्रनिर्मातृभिः सुप्रसिद्धोपन्यास-नाटक-जीवनानाश्रित्य बहूनि सफलचित्राणि निर्मितानि । तथापि भारतीयचलचित्रे यथेष्टसुधाराणाम् आवश्यकता अस्ति । तादृशान्येव चित्राणि प्रदर्शनीयानि यैः सामा-जिकानां जीवनोन्नयने, आशावादसमानयने, देशस्य विस्मृता-नाम् उपेक्षितानां गायन-वादन-नृत्यानां विकासे, लाभो भवेत् । सुनिश्चितरूपेण इदं सौभाग्यजनकं वृत्तं यत् चलचित्रोत्पादकेषु समस्तेषु देशेषु विश्वस्मिन् भारतस्य द्वितीयं स्थानमस्ति ।

यावत् पूर्णतः सुधारो न भवति तावत् चलचित्र-दर्शनं परित्याज्यमेव सर्वैः मनुष्यैः विशेषतः छात्रैः । नग्नचित्रप्रदर्शनपूर्णे वर्तमानयुगे चलचित्राणाम् अवलोकनम् अशोभनकरं हानिकरञ्च मन्यन्ते अनुभविनो मनीषिणः—

दर्शनं चलचित्राणां सर्वथा हानिकारकम् ।
स्वास्थ्यस्यापि च धर्मस्य धनस्य चरितस्य च ॥

**प्रश्नाः**

१. विज्ञानस्य का का उन्नतिः ?
२. साधारणजनता कथं चलचित्राय प्रेम प्रदर्शयति ?
३. चलचित्रस्य प्रथम आविष्कारः कदा कुत्र च अभूत् ?
४. भारते आदिमं चित्रं कदा निर्मितम् ?
५. प्राचीनार्वाचीनयोः चलचित्रयोः कः अन्तरः जातः ?
६. के के चलचित्रम्पश्यन्ति ?
७. कस्मिन् कस्मिन् क्षेत्रे चलचित्रम् अपूर्वभूमिकां सम्पादयति ?
८. पाश्चात्त्यदेशेषु चलचित्रं किमर्थमुपयुज्यते ?
९. अस्मद्देशीयानां कीदृश्यः क्षतयः चलचित्रेण सम्पादिताः ?
१०. केषां सन्निवेशः चलचित्रेषु अपेक्षितो वर्तते ?
११. भारतीयशासकानां का योजनाऽस्ति ?
१२. कीदृशानि चित्राणि प्रदर्श्यानि ?



## स्वराज्यस्य मन्त्रद्रष्टा

### ( लोकमान्यः श्रीबालगङ्गाधरतिलकः )

कर्मयोगस्य पूर्णावतारः, अशेषविद्यानाम् आगारः, भारतराष्ट्रस्य कुशलकर्णधारः लोकमान्यः श्रीबालगङ्गाधर-तिलकः षट्पञ्चाशदधिके अष्टादशशततमे ईशवीये वर्षे जुलाइमासस्य त्रयोविंशत्तिथौ ( २३-७-१८५६ ) महाराष्ट्र-



कोंकणक्षेत्रे, रत्नागिरौ, चिखलग्रामे, पवित्रे ब्राह्मणकुले आविर्बभूव । तस्य महासत्त्वस्य जन्मना न केवलस्य महाराष्ट्रप्रान्तस्य अपितु समस्तस्यैव भारतवर्षस्य भालं समुन्नतम्, सौभाग्यसूर्यश्च प्रकाशितोऽजायत । लोकमान्यः देशस्य सर्वश्रेष्ठं नररत्नम् आसीत् । यथा स असाधारणो

विद्वान्, उदाराशयः, मनस्वी तथैव निपुणतमः राजनीतिज्ञोऽप्यभूत्। महात्मनः गान्धीमहोदयात् पूर्वं देशस्य सर्वेष्वेव प्रान्तेषु, समस्तेष्वेव समाजेषु यादृशः प्रभावः, यादृशं गौरवं च तस्यासीत्, न तादृशम् अन्यस्य कस्यापि राष्ट्रनायकस्य। आसेतुहिमाचलम् आसीत्तस्य असाधारणः सम्मानः। यदा स्वातन्त्र्यस्य नामग्रहणमपि अमन्यत महापराधः, तस्मिन् महति भयानकेऽपि गौराङ्गशासने 'स्वराज्यमस्माकं जन्मसिद्धोऽधिकारः' इति निर्भयं स कृतवान् निनादम्। साम्प्रतं तस्य समयस्य भयानकपरिस्थितेः अनुमानमपि कर्तुं वयम् असमर्थाः।

लोकमान्यस्य पिता गङ्गाधररावः साधारणविद्यालये शिक्षणकार्यं कुर्वन् आसीत्। बालकस्य शिक्षा स्वगृहे एव समारब्धाभूत्। आंग्लभाषामध्येतुं स पुण्यपत्तने ( पूना ) नगरे समागतवान्, तत्रैव च द्विसप्तत्यधिके अष्टादशशततमे ( १८७२ ) ईशवीये वर्षे प्रवेशिकापरीक्षां ससम्मानम् उत्तीर्णवान् दुर्भाग्यतस्तस्मिन्नेव वर्षे तस्य पिता स्वर्गगामी बभूव तथापि धीरः सः षट्सप्तत्यधिके अष्टादशशतमे ( १८७६ ) ईशवीये वर्षे बी० ए० परीक्षां, वर्षत्रयानन्तरं विधानपरीक्षां च उत्तीर्णवान्। तस्मिन् समये राजकीयोच्चपदप्राप्तिः प्राड्विवाककार्यम् ( वकालत ) इत्यादयः बहवो मार्गाः आसन् सुलभाः येषामनुसरणेन महैश्वर्यप्राप्तिरभूत्

सुगमा । किन्तु अर्थार्जनं, भौतिकसुखम् उच्चपदलाभो वा नैवासीत्तस्य जीवनस्य ध्येयम् । पाश्चात्यशासनपीडितायाः मातृभूमेः परतन्त्रतापाशमोक्षणम् एव एकमात्रं लक्ष्यम् आसीत्तस्य जीवनस्य । पाश्चात्यानां दुःशासनेन समस्तैव जनता स्वदेशस्य अविद्यया, दारिद्र्येण, आधिना, व्याधिना च नितान्तमेवासीत् पीडिता हताशा च ।

राष्ट्रियशिक्षायाः प्रचारं विना देशस्य वास्तविकम् उत्थानम् असंभवम् इति स्वमनसि स दृढं निर्णीतवान् । शासकास्तु तादृशीमेव शिक्षामदापयन् राजकीयविद्यालयेषु यया शिक्षिताः युवानः देशभक्तिभावनाशून्याः तेषां शासनकार्ये सहायका भवेयुः । अतः तस्य हृदये राष्ट्रिय-विद्यालयानां स्थापनाय प्रबलेच्छा जागरिताभूत् । लोकमान्यः, विष्णुशास्त्री, आगरकरमहोदयश्चेति त्रयो महानुभावाः मिलित्वा 'न्यू इङ्गलिश स्कूल' नामकं राष्ट्रिय-विद्यालयं स्थापितवन्तः । त एव त्रयः पूर्वं त्रिंशद्रूप्यक-मासिकवेतनेन अध्यापयितारश्च तत्राभूवन् । अनन्तरं स एव विद्यालयः समुन्नतो भूत्वा 'फर्गुशन कालेज' नाम्ना प्रसिद्धोऽभूत् । शासकानाम् अन्यायवारणाय, राष्ट्रिय-जागरणस्य प्रचाराय च राष्ट्रियपत्रद्वयमपि प्रकाशितं तैः । मराठाभिधस्य आंग्लपत्रस्य लोकमान्यः, मराठीस्थ-केसरीति विख्यातस्य च आगरकरमहोदयः सम्पादकौ

अभवताम् । कोल्हापुरराज्ये माधवरावेण कृतस्य अन्यायस्य पत्रयोरुभयोः प्रकाशिताऽभूत् तीव्रतमा आलोचना । माधवरावेण कृते मानहानेः अभियोगे उभावपि सम्पादकौ कारागारवासदण्डेन दण्डितौ । अन्यलिखितलेखस्यापि फलं स्वीकृतवान् सहर्षं लोकमान्यः । मतभेदेन हेतुना आगरकरमहोदयेन परित्यक्ते सम्पादने केसरिणोऽपि सम्पादनभारं लोकमान्य एव वोढुं प्रारब्धवान् ।

राष्ट्रियविद्यालयस्थापनेन राष्ट्रियपत्रद्वयसम्पादनेन च देशोद्धारं समाजसेवां च कुर्वतोऽपि तस्य स्वदेशकल्याणचिन्ता न जीर्णाभूत्, अतः पत्रद्वये प्रभावपूर्णान् लेखान् लिखित्वा गणपतिमहोत्सवस्य, शिवराजमहोत्सवस्य च राष्ट्रियदृष्टिकोणेन, समाजोत्थानदृष्ट्या च आवश्यकतां प्रादर्शयत् । फलतः द्वावपि महोत्सवौ प्रारब्धौ, तयोः आश्चर्यकारी प्रचारः प्रभावश्च सञ्जातः । महाराष्ट्रे तेजस्विनां स्वदेशाभिमानिनां तरुणानां 'राष्ट्रियदल'नाम्नी संस्थैकापि स्थापिताभूत् । शासकानाम् अन्यायस्य तीव्रतमम् आलोचनम्, प्रजापक्षस्य भावानां निर्भयतया प्रकाशनं समर्थनं च इत्यादीनि आसन् तस्याः प्रधानानि कार्याणि । लोकमान्यः ताम् अतीवप्रबलां प्रभाववतीं च अकार्षीत् । महाविद्यालयद्वारा राष्ट्रियशिक्षाप्रचारेण, समाचारपत्रयोः प्रकाशितैः निर्भीकैः, गम्भीरैः, विद्वत्तापूर्णैश्च

विचारैः, गणेशशिवराजमहोत्सवयोः प्रवर्त्तनेन, असाधारणेन त्यागेन, उग्रेण तपसा, प्रज्वलता देशप्रेम्णा च समस्ते एव भारते तस्य कीर्तिकौमुदी प्रकाशिताऽभूत् ।

न ज्ञायते कथं शासकाः बम्बईव्यवस्थापिकायाः सभायाः तं शासनविरोधिनमपि सदस्यं निर्वाचितवन्तः । तत्रापि शासनस्य हानिकरयोजनानां, प्रजाविरोधिवृत्तीनां च तीव्रालोचनायां स लेशतोऽपि सङ्कोचं नाकरोत् । सप्ताशीत्यधिके अष्टादशशततमे ( १८८७ ) ईशवीये वर्षे मूषिकामार्याः (प्लेग का) भयंकरः प्रकोपोऽभवत् । तत्प्रतिकारार्थं शासनद्वारा प्रवर्तिताः उपायाः गृहपरित्यागादिरूपाः व्याधेरपि कष्टतराः असह्यतराश्चाभूवन् । अन्ततः केनचित् पुरुषेण 'प्लेगकमिटी' नाम्न्याः समितेः सभापतेः रैंडमहोदयस्य वधः कृतः । अपराधिनः किमपि कर्तुमशक्ताः निर्दोषस्य तिलकमहाराजस्यैव शिरसि हत्यायाः अपराधं स्थापितवन्तः । तस्य केसरिपत्रे प्रकाशितं लेखमेव ते कारणं समर्थितवन्तः । स अष्टादशमासेभ्यः कारागारे स्थापितोऽभूत् । तत्रैव स अत्यन्तगवेषणापूर्णम् आर्यनिवासनामकं वैदिकनिबन्धं लिखितवान् । तं पठित्वा तिलकमहाराजस्य असाधारणं पाण्डित्यं ज्ञात्वा मैक्समूलरमहोदयः तस्य मोक्षणाय महाराज्ञीं विक्टोरियां प्रार्थितवान् । ततश्च अवधितः पूर्वमेव कारागात् स मुक्तः सञ्जातः ।

कारागारात् मुक्तस्य तस्य सर्वे एव देशवासिनः अभूतपूर्वं स्वागतं कृतवन्तः। स पूर्वापेक्षयापि अधिकेन उत्साहेन केसरिणः सम्पादनकार्ये आत्मानं नियुक्तवान्। लार्डकर्जनद्वारा विहितस्य वङ्ग-विच्छेदस्य विरोधे स्वदेशीयान्दोलनं प्रवर्तितमभूत्। तस्मिन् आन्दोलने स्वदेशीयवस्तूनां प्रचारे विदेशीयवस्तूनां बहिष्कारे च स्वकेसरिपत्रद्वारा वीरत्वपूर्णं कार्यं कृतं लोकमान्येन। शासकैः प्रवर्तितायाः दमननीतेः तेन अत्यन्तं कद्वालोचना कृता। केसरिपत्रे एव मार्मिकाः राजनीतिकलेखाः प्रकाशिताः अभूवन्। तेषां प्रभावेण समस्ते एव देशे कर्जनस्य अनादरः, तिलकस्य केसरिणश्च अत्यन्तं समादरोऽभवत्। वङ्गप्रान्ते प्रारब्धस्य स्वदेशीयान्दोलनस्य देशव्यापकत्वविधाने लोकमान्य एव प्रधानं कारणम्।

केसरिपत्रे प्रकाशितौ 'देशस्य दुर्भाग्यम्' 'इमे उपायाः न स्थायिनः' इति लेखौ आपत्तिजनकौ कथयित्वा तिलकस्य विरुद्धं प्रधानन्यायालयेऽभियोगोऽभूत् प्रवर्तितः। स्वपक्षस्य समर्थनं लोकमान्यः स्वयमेव कृतवान्। चतुर्दिनानि यावत् प्रतिदिनं षड्घण्टापर्यन्तं तस्य भाषणमतिविद्वत्तापूर्णं विशिष्टानां विधानविदुषामपि आश्चर्यकारकमभूत्। तस्य विरुद्धम् अन्यायपूर्णसंमत्या षड्वर्षावधि देशनिष्कासनस्य दण्डं श्रावितवान् प्रधानन्यायाधीशः।

तस्य देशनिर्वासनेन समस्ता एव देशवासिनः दुःखसिन्धौ निमग्नाः संजाताः। नगरे नगरे, ग्रामे ग्रामे, सर्वत्रैव शोकप्रदर्शनं जातम्।

'माण्डले'स्थानस्य तपःकुटीरे आध्यात्मिकं जीवनं यापयन् अत्यन्तसमाहितस्वाध्यायस्य अगाधपाण्डित्यस्य च फलस्वरूपं 'गीतारहस्य'नामकं ग्रन्थरत्नं प्रणीय स स्वदेशं प्रत्यागतः। महता समारम्भेण तस्य स्थाने स्थाने स्वागतं संजातम्। स पुनः पूर्णोत्साहेन देशसेवाकार्याणि कर्तुं प्रारब्धवान्। 'स्वराज्यमस्माकं जन्मसिद्धोऽधिकारः, तत्प्राप्यैव विरंस्यामः' इति तस्य सिंहनादः समस्ते एव राष्ट्रे प्रतिध्वनितोऽभूत्। स स्वराज्यसंघं संस्थाप्य तस्य पूर्णप्रचारं कृतवान्। तस्य प्रयत्नेनैव उत्तरदायित्वपूर्णं शासनं लब्धं देशेन। ऊनविंशत्यधिके ऊनविंशतिशततमे ईशवीये वर्षे ( १९१९ ) तस्य जन्मदिवसमुपलक्ष्य लक्षरूप्यकाणि तस्मै उपहारीकृतानि देशवासिभिः किन्तु तेन किमपि स्वयमगृहीत्वा 'होमरूललीग'नाम्न्यै राष्ट्रिय-संस्थायै तानि अशेषाण्येव प्रदाय निःस्पृहतायाः प्रज्वल-दुदाहरणं प्रदर्शितम्। तस्मिन्नेव वर्षे जुलाइमासस्य त्रयोविंशत्तिथौ—

'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥'

इति गीताश्लोकं पठन् श्रीकृष्णचन्द्रं परमात्मानं प्रणमन् च अवतारलीलासंवरणं कृतवान् राष्ट्रप्राणः लोकमान्यः।

तस्य वियोगेन समस्ताः एव देशवासिनः वर्णनातीतं शोकं प्रकाशितवन्तः, भारतमाता च अनाथा जाता। तस्यैव कार्यप्रणालीं शिक्षासरणिं च अनुसरन्तः श्रीमालवीयः, महात्मा गान्धी, श्रीलाजपतरायः, श्रीविपिनचन्द्रपालः, श्रीमोतीलालः, श्रीसुभाषचन्द्रश्चेत्यादयः देशनेतारः स्वदेशं स्वतन्त्रं कर्तुं समर्थाः अभवन्। तस्य महात्मनः उपकारात् ऋणात् कदापि मुक्ताः न भविष्यन्ति देशवासिनः, अनन्त-कालं यावत् तस्य गुणान् स्मरिष्यन्ति च। 'स्वराज्यमस्माकं जन्मसिद्धोऽधिकारः, पुरुषार्थेन मानवः ईश्वरोऽपि भवितुं शक्नोति, येन मातृभूमेः रक्षार्थं प्राणाः समर्पिताः स एव पूज्यः देशभक्तश्चे'त्यादिः तस्य उपदेशानां सारांशः। तस्य विषये सत्यमेवोक्तं केनचित् कविना—

दानाय लक्ष्मीः सुकृताय विद्या,<br>
चिन्ता परब्रह्मविनिश्चयाय।<br>
परोपकाराय वचांसि यस्य,<br>
धन्यस्त्रिलोकीतिलकः स एव॥

**प्रश्नाः**

१. लोकमान्यतिलकः कदा कुत्र च जन्म लेभे ?

२. तस्य जन्मना किं किम् अभूत् ?

३. गान्धिनः पूर्वं तस्य कीदृशः प्रभावः आसीत् ?

४. स किं निनादं कृतवान् ?

५. कदायं प्रवेशिका-बी. ए. परीक्षे उत्तीर्णवान् ?

६. तस्य जीवनस्य किं लक्ष्यमासीत् ?

७. फर्गुसनकालेजस्य, मराठा-देशकीयपत्रयोश्च विषये किमुक्तम् ?

८. कैः कीदृशैः कार्यैः तस्य कीर्तिकौमुदी प्रकाशिताऽभूत् ?

९. 'मैक्समूलरः' तस्य मोक्षणाय विक्टोरियां कथं प्रार्थितवान् ?

१०. 'कर्जन'स्य अनादरः कथम् अभूत् ?

११. न्यायाधीशः तस्य विरुद्धं किं कथं च श्रावितवान् ?

१२. 'गीतारहस्यम्' कुत्र प्रणीतवान् सः ?

१३. तस्य कः सिंहनादः प्रतिध्वनितोऽभूत् ?

१४. होमरूललीगाय किं कृतं तेन ?

१५. कथमिमं धन्यार्हम् अवगच्छति कविः ?



# काशी हिन्दू विश्वविद्यालय का कुलगीत

मधुर मनोहर अतीव सुन्दर, यह सर्वविद्या की राजधानी।
यह तीन लोकों से न्यारी काशी,
सुज्ञान धर्म और सत्यराशी।
बसी है गंगा के रम्य तट पर, यह सर्वविद्या की राजधानी।
नये नहीं हैं यह ईंट पत्थर,
है विश्वकर्मा का कार्य सुन्दर।
रचे हैं विद्या के भव्य मन्दिर, यह सर्वसृष्टि की राजधानी।
यहाँ की है यह पवित्र शिक्षा,
कि सत्य पहले फिर आत्म-रक्षा।
बिके हरिश्चन्द्र थे यहीं पर, यह सत्यशिक्षा की राजधानी।
वह वेद ईश्वर की सत्यवानी,
बने जिन्हें पढ़ के ब्रह्मज्ञानी।
थे व्यास जी ने रचे यहीं पर, यह ब्रह्म-विद्या की राजधानी।
वह मुक्तिपद को दिलानेवाले,
सुधर्म-पथ पर चलाने वाले।
यहीं फले फूले बुद्ध शङ्कर, यह राज-ऋषियों की राजधानी।
सुरम्य धाराएँ वरुणा अस्सी,
नहाए जिनमें कबीर तुलसी।
भला हो कविता का क्यों न आकर, यह वागविद्या की राजधानी।
विविध कला अर्थशास्त्र गायन,
गणित खनिज औषधि रसायन।
प्रतीचि-प्राची का मेल सुन्दर, यह विश्वविद्या की राजधानी।
यह मालवी की है देशभक्ति,
यह उनका साहस यह उनकी शक्ति।
प्रगट हुई है नवीन होकर, यह कर्मवीरों की राजधानी।
मधुर मनोहर अतीव सुन्दर, यह सर्वविद्या की राजधानी।

